ॐ ह्रीँ श्रीँ पार्श्वनाथाय नमः।

अनेकजैनपूर्वाचार्यविरचितः

# श्रीजैनस्तोत्रसन्दोहः।

## द्वितीयो विभागः।

---

[ १ ]

श्रुतकेवलिश्रीभद्रबाहुस्वामिसूत्रितं

श्रीद्विजपार्श्वदेवगणिरचितलघुवृत्त्या विभूषितं

## उपसर्गहरस्तोत्रम्।

---

धरणेन्द्रं नमस्कृत्य, श्रीपार्श्वं मुनिपुङ्गवम्।
'उपसर्गहर'स्तोत्र–वृत्तिं वक्ष्ये समासतः॥ १॥

प्रणतसुरासुरललाटविन्यस्तमुकुटश्रेणिसमाश्रितस्य चञ्चच्चूडामणिदम्भोलिप्रमुखरत्नप्रभाप्राग्भारप्रकाशितपादपङ्केरुहस्य श्रीपार्श्वनाथस्य सम्बन्धि मन्त्रस्तोत्रं 'उपसर्गहर'नामप्रख्यातं पञ्चगाथाप्रमाणम्। तस्य मया कथितं-वृद्धोपदेशेन अस्यैव स्तोत्रकल्पानुसारेण चात्मनः स्फुटावबोधनिमित्तं संक्षिप्तावृत्तिर्विधीयते। [ मध्यगाथा ] तस्य [१]चाद्यां गाथामनुक्रमेणाह—

उवसग्गहरं पासं पासं वंदामि कम्मघणमुक्कं।
विसहरविसनिन्नासं, मंगलकल्लाणआवासं॥ १॥

---

१ 'पांचं' (?) इति ख-पाठः।

अस्य व्याख्या—वन्दामि–स्तौमि । कं कर्मतापन्नम् ? पार्श्वनाथ-स्वामिनं अशोकाद्यष्टमहाप्रातिहार्यपूजासमन्वितं चतुस्त्रिंशद् बुद्धातिशयोपेतं त्रयोविंशतितीर्थकरेभ्यः श्रीपार्श्वनाथस्वामिनः समवसरणभूतलं तत्सर्वबाह्यं तस्य [1]सम्बन्धापन्नमनेकं प्राकारत्रयालङ्कृतगोपुररत्नमयकवसीस(पिशीर्ष)तोरणविराजितमवनितलानि । योजनहारीणि [2]प्रसन्नभव्यलोकहृदयानन्दकारीणि प्रधानाऽर्धमागधीभाषाविशेषेण समकालमेव चित्रस्वरूपनरामरादिजन्तुसंशयसन्दोहापोह[3]समन्वाद्यनेन (सम्पादनेन)स्वविहारपवनप्रसरेण ? पञ्चविंशतियोजनप्रमाणं चतुर्दिग्विभागमहीमण्डलमध्ये सर्वव्याधिरजोराशेरपसारणेन चतुर्विधश्रीश्रमणसङ्घदेवनरेन्द्रदानवचारणविद्याधरकिन्नरनारीतिर्यञ्च(कु ?)प्रभृतिभिरमृतरसं(मिव) पीयमानं निरन्तरं चित्ताह्लाददानमिति ध्यानमित्युच्यते । पुनरपि कथम्भूतम् ? उपसर्गहरमिति । कः शब्दार्थः ? उच्यते—'सृज विसर्गे' (पा० धा० १४१५) इत्यस्य धातोरुपशब्दपूर्वकस्य उपसर्जनं उपसर्गः । 'भावे' (कातन्त्रे [4]सू० ७५० पृ० २१४) घञ्प्रत्ययः 'नामिनश्चोपधाया लघोः' (कातन्त्रे सू० १०६ पृ० ११७) इत्यनेन सूत्रेण गुणे कृते पश्चात् 'चजोः कगौ धुड्घानुबन्धयोः' (कातन्त्रे सू० ५४२, पृ० १९०) इत्यनेन सूत्रेण गादेशे कृते उपसर्ग इति सिद्धम् । 'हृञ् हरणे' (पा० धा० ८९९) इत्यस्य धातोः हरणं हरः 'स्वरवृदृगमिग्रहाम् (अल्)' (कातन्त्रे सू० ५७५ पृ० १९४) ' अल्प्रत्ययः । 'नाम्यन्तयोर्धातु-विकरणयोर्गुणः' (कातन्त्रे सू० ३२, पृ० १०७) हरः इति सिद्धम् । उपसर्गहरं–प्रत्यूहविध्वंसकमित्यर्थः । पार्श्वमितिशब्देन पार्श्वनामा यक्षः स उच्यते । तत्र पार्श्वनाथतीर्थसमुत्पन्नत्रयोविंशतितमो यक्षराट् अष्टाचत्वारिंशत्सहस्रयक्षपरिवृतः श्रीपार्श्वनाथपादयुग्मसेवां करोति । पुनः कथम्भूतम् ? 'कर्मघनमुक्तं', क्रियन्ते इति कर्माणि, घनानि च तानि कर्माणि

---

१ 'यान्वमनेकं' इति ख-पाठः । २ 'प्रसरन्त' इति ख-पाठः । ३ 'समत्पाद्यनेन' इति ख-पाठः । ४ एष सूत्रपृष्ठाङ्को दीयते १९५२ तमे वैक्रमीयाब्दे हीराचन्द्रनेमिचन्द्रश्रेष्ठिना प्राकाश्यं नीतायाः कातन्त्ररूपमालाया आधारेण ।

च 'क्वचित् परनिपातोऽपि' इति (वचनात्) कर्मघनानि तैर्मुक्तम्, निबिडकर्मरहितमित्यर्थः । पुनरपि कथम्भूतम् ? 'विषधरविषनिर्नाशं' दुष्टसर्पविषविनाशकमित्यर्थः । कथम्भूतम् ? 'मङ्गलकल्याणावासं' । मङ्गलमिति कः शब्दार्थः ? उच्यते–'अगि-रगि-लगि-मगी'ति दण्डकधातुरस्य 'इदितानुस्वधातोः' इति विहितकुणादिकाडलभूतप्रत्ययान्तस्य अनुबन्धलोपे च कृते प्रथमैकवचनान्तस्य मङ्गलमिति रूपं भवति । मङ्ग्यते यथाहितमनेनेति मङ्गलम् । मङ्ग्यते–विधिना गम्यते–साध्यते इति यावत् । अथवा मङ्गेति धर्माभिधानम् । 'रा ला आदाने' इत्यस्य धातोर्मङ्ग उपपदे 'आतोऽनुपसर्गात् कः' (कातन्त्रे सू० ५८७, पृ० १९५) इति कप्रत्ययान्तस्य 'आतो लोप इट् किन्तिर्ती (?)' अनेन सूत्रेणाकारलोपे च कृते प्रथमैकवचनान्तस्यैव मङ्गलमुम(रूपं?)सिद्धमिति । कल्याणमिति कः शब्दार्थः ? उच्यते–'अण रण' इत्यादिदण्डकधातोः कल्यशब्दपूर्वकस्य कल्यमणतीति कल्याणं कर्मण्यपि 'अस्योपधाया (दीर्घो वृद्धिर्नामिनामिनिचट्सु') (कातन्त्रे सू० २२१, पृ० १३६) इत्यनेन सूत्रेण अकारदीर्घत्वम् । 'समानः सवर्णे दीर्घीभवति (परश्च लोपम्') (कातन्त्रे सू० २४ पृ० ५) इत्यनेन दीर्घे कृते द्वितीयैकवचनान्तस्यैव कल्याणं सिद्धमिति । आवासमिति कः शब्दार्थः ? उच्यते–'वस निवासे' इत्यस्य धातोः आङ्शब्दपूर्वकस्य आवासनं आवासः। भावे घनि कृते च समासे 'अस्योपधाया०' (कातन्त्रे सू० २२२) इत्यनेन सूत्रेण कृते दीर्घे आवासं-निवासं रमणीयं स्थानं श्रीपार्श्वनाथजिनालयम् । इति गाथार्थः ॥ १ ॥

अधुना वृद्धसम्प्रदायः—

उपसर्गहरं पार्श्वं प्रत्येकमध्ययन्त्रमन्त्रदर्शनायाह—क्षकारनामगर्भितस्य बाह्येषु चतुर्दलेषु पार्श्वनाथ दातव्यम् । दलाग्रेषु हरः ४ इति न्यसेत् । बाह्ये ह हा हि ही हु हू हे है हो हौ हं हः वेष्टयेत्, मायाबीजे त्रिगुणं वेष्टिते यन्त्रम् । १

*वंकारनामगर्भितस्य बहिश्चतुर्दलेषु पार्श्वनाथ दातव्यम् । बहिर्दरर

* द्वितीययन्त्रज्ञापकः पाठः पतितो भाति ।

निरन्तरं पूरयेत् । बाह्ये द्वादश ह हा इत्यादि वेष्टयेत् । बाह्ये अकारादि-क्षकारपर्यन्तं वेष्टयेत् । मायाबीजं त्रिगुणं वेष्ट्यं, तृतीयं यन्त्रम् । ३

हूंकारनामगर्भितस्य शेषं पूर्ववत् सर्वं द्रष्टव्यम् ४। हं हूं नामगर्भितस्य, हकारं वेष्टयेत् । बाह्ये षोडश स्वरानावेष्टयेत् शेषं पूर्ववत् ५ ।

पञ्चमयन्त्रवद् क्षंनामगर्भितस्य बहिरष्टदलेषु ॐ पार्श्वनाथाय स्वाहा दातव्यं, शेषं पूर्ववत् यन्त्रम् ६ । हं (हुं?) कारनामगर्भितस्य बाह्ये मायया वेष्टयेत् । बहिः ॐ पार्श्वनाथाय स्वाहा वेष्ट्यं, शेषं पूर्ववत् ॥ ७ ॥

एतेषां [1]सप्तयन्त्राणामपि कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य कुमारी-(कर्तित) सूत्रेणावेष्ट्य वामभुजदण्डे धारणीयं जगद्वल्लभसौभाग्ययशोल-क्ष्मीवृद्धिभूतपिशाचराक्षसज्वरग्रहदोषशाकिनीविषमविषधरप्रभृतिभयरक्षा भवति । ॐ ह्रीं श्रीं हर हर स्वाहा । **अस्य क्रिया**–अष्टोत्तरशतश्वेतपुष्पै-र्दिनत्रयं श्रीपार्श्वनाथसमीपे क्रियमाणेन सर्वसम्पदादिकं भवति । ॐ गम-लवर्यु (ग्म्ल्व्र्यूं ?) त्रिशूलमुद्रया ग्राँ ग्रीं ग्रूं ग्रौं ग्राहय २ छिंद २ भिंद २ विवा-रिम (निवारय?) २ दमलवर्यू (व्म्ल्व्र्यूं) व्रां व्रीं व्रूं व्रौं व्रः हा हा ताडय २ घमलवर्यू (घ्म्ल्व्र्यूं) घ्रां घ्रीं घ्रूं घ्रौं घ्रः घ्राः र्यूं २ हुं २ फट् हमलवर्यू (झ्ल्व्र्यूं) हां हीं हूं हौं हः हा हा घे २ (घे २) कठोरमुद्रायां ज्वल २ ज्वालय २ प्रज्वल २ प्रज्वालय २ ॐ नमो भगवते पार्श्वयक्षाय चण्डक्रोधाय सप्तफणाय हुं क्ष्रूं श्रूं शमलवर्यू (श्म्ल्व्र्यूं) श्रां श्रीं श्रूं श्रौं श्रः हा २ घे २ वज्रासित्रिशूलधारया हर २ इदं भूतं हन २ पच २ त्रासय २ ख २ खाहि २ मन्त्रराज आज्ञापयति हुं फट् स्वाहा । पार्श्वयक्षमन्त्रः ॥

**अधुना भूतपिशाचप्रेतप्रभृतिरक्षामाह**–अग्नेय[2]मण्डले त्रिकोणेषु रांकारे दातव्यं ज्वालाग्रे रेफस्वस्तिकभूषितम् । तन्मध्ये रमलवर्यू (र्म्ल्व्र्यूं)संलि-ख्य बाह्ये ॐ रमलवर्यू (र्म्ल्व्र्यूं )रपरां हाः हां आं क्रों क्ष्वीं ह्रीं क्लीं व्लूं हां न्हीं पार्श्वयक्षिणी ज्वल २ प्रज्वल २ दह २ पच २ इदं भूतं निर्धाटय२धूमान्धकारिणी ज्वलनशिखे । हूं फट्(व) मात्रीदूतिकासहिते पार्श्वयक्षिणी आज्ञापयति स्वाहा ।

---

१ एतेषामाकृतयो विलोक्यन्तामस्यैव ग्रन्थस्य प्रथमे विभागे ग परिशि-ष्टद्वयाः । २ ' .......... ' इति ख पाठः ।

एतन्मन्त्रेण वेष्टयेदुद्घाटय इमं पिण्डं ललाटे ध्यायेदमिवर्णं सर्वाङ्गं भूतं ज्वरं शाकिनीप्रभृति नाशयतीत्यर्थः ॥

इदानीं भूतमन्त्रानन्तरं सर्वविषापहारमहाविषधरविषनिर्नाशभावमाह-ॐ क्षमलवर्यूं ( म्ल्व्र्यूं ) वं ५ हां आं क्रों क्षीं क्रीं ग्लूं हां हीं ज्वालामालिनी क्षुद्रारिणी प्रतिसहितविषं निर्विषं कुरु २ स्थावरविषं निर्विषं कुरु १ स्थावरविषं अङ्गजं कृत्रिमं विषं जाठरं जोगजङ्गमविषं अपहर २ इमं बंधं अमृतेन अभिषिञ्चय २ उत्थापय २ दण्डेनाक्रम्य विषमं विषं ठः ३ ज्वालामालिन्याज्ञापयति स्वाहा । पुरुषप्रमाणं दण्डं गृहीत्वा अष्टोत्तरशतवारमभिमन्त्रयेत् ताडयेदूर्ध्वं साधेया सर्वसन्धिषु कालदष्टो उत्थापयति । ॐ नमो भगवते श्रीघोणे हर २ दह २ पच २ मथ २ चर २ धर १ कप २ जरसीद्ध प्रस २ मं २ थं २ क्ष्मीं हीं हां २ हे भगवति श्रीमं घोणधः सः ३ ठः ३ ह: ३ रः ३ धेनु क्रीन् वींवरविहंगमानुजेरन दारिकरयरिदासोरय २ गं ३ ठ २ हूं फट् स्वाहा । श्रीघोणमन्त्रः-ॐ नमो भगवते श्रीघोणे हर २ दर २ सर १ धर २ मथ २ हरसा २ क्ष २ र २ हमलवरयूं क्षमलवरयूं घमलवरयूं रमलवर्यूं वमलवरयूं सर्पस्य गतिस्तम्भं कुरु कुरु स्वाहा । एतन्मन्त्रद्वयं स्मरयेत् ( स्मरेत् ) त्रिसन्ध्यं सर्पभयं नाशयति ॥ ॐ नमो भगवते श्रीपार्श्वनाथाय पद्मावतीसहिताय हिलि २ मिलि २ चिलि २ किलि २ हां हीं हूं हों हः क्रों २ यां २ हंस हुं फट् स्वाहा । सर्वज्वरनाशनमन्त्रः॥ ज्वरानन्तरं देवकुलं दर्शयन्नाह । तद्यथा—यमलवरयूं क्षमलवरयूं समलवरयूं नामगर्भितस्य पार्श्वे प्रत्येके हमलवरयूं वेष्टयेत्, पार्श्वे षोडश स्वराः पूरयेत्, तद्बहिरष्टदलेषु कचतटपयश ममलवरयूं पिण्डाक्षराणि दातव्यानि । बहिरष्टपत्रेषु ब्रह्माणी कुमारी इन्द्राणी माहेश्वरी वाराही वैष्णवी चामुण्डा गणपतये ॐकारपूर्वं नामान्तं दातव्यम् । तद्बाह्ये ममलवरयूं यः ५ हाः हां आं क्रों क्षीं क्रीं ग्लूं हां ह्रीं पार्श्वयक्षिणी मात्री ब्रह्माणी दूतिकासहिते नमः । ( आ )वेष्टय पूर्वोक्तक्रमेण ककारादिहकारपर्यन्तं पिण्डाक्षराणि बिन्दुकलाविभूषितानि वेष्टयेत् । बाह्ये मायाबीजं त्रिधा वेष्टयेत् । यन्त्रत्रयस्य मन्त्रम्-ॐ आं क्रों क्षीं ह्रीं क्लीं ब्लूं द्रां

ह्रीं ज्वालामालिनी नमः। मूलविद्या। अष्टोत्तरशतं निरन्तरं त्रिसन्ध्यं ध्यायमानेन सर्वसिद्धिवृद्धिर्लक्ष्मीर्भवति ॥ १ ॥

इदानीं प्रथमगाथायाः कल्पानुसारेण मन्त्रं यन्त्रं च व्याख्याय गाथयाऽ[1]नन्तरं अष्टारसष्टवलयारचक्रं सप्रपञ्चमाह—

विसहरफुलिंगमंतं कंठे धारेइ जो सया मणुओ।

तस्स गह–रोग–मारी–दुट्ठजरा जंति उवसामं ॥ २ ॥

अस्य व्याख्या—यान्ति–गच्छन्ति। के एते कर्तारः? ग्रहरोगमारिदुष्टज्वरा इति। आदित्यप्रभृतयोऽष्टाशीतिग्रहपीडा नाशयन्ति. रोगा–वातपित्तश्लैष्मिकामयादयः। मारी–क्षुद्रयन्त्रमन्त्रयोगिनीकृतमहाघोरोपसर्गज्वररुक्प्रभृतयः। दुष्टज्वरा अनेकप्रकारा–दाघ–(ह)–ज्वर–वातज्वर-पित्तज्वर–विषमज्वर–नित्यज्वर–वेलाज्वर-मुहूर्तज्वरादयः। कं कर्मतापन्नम्? 'उपशामम्' विनाशं यान्तीत्यर्थः। कस्य? तस्य। यः किं०? आत्मना[म]नुजः–पुरुषो धारयति–व्यवस्थापयति। कं कर्मतापन्नम्? 'विषधरस्फुलिङ्गमन्त्रं' विषधरस्फुलिङ्गस्य मन्त्रस्तम्। विषधरस्फुलिङ्गमन्त्रोपलक्षणत्वात् तथैवप्रकारं पञ्चनमस्कारचक्रमष्टारमष्टवलयारचक्रमुच्यते। क्व धारयति? कण्ठे। निरन्तरं एकाग्रमानसध्यायमानसर्वकल्याणसम्पत्कारकमित्यर्थः। कथम्? 'सदा' सर्वकालम्। इति गाथार्थः॥

अस्य भावनाविशेषः वृद्धसम्प्रदायः—प्रथमं तावदष्टारमष्टवलयारमध्ये हूंकारनामगर्भितस्य वहिरष्टदलेषु ॐ पार्श्वनाथाय ह्रीं नमः संलिख्य दक्षिणपार्श्वे पार्श्वयक्षं संस्थाप्य वामपार्श्वे पार्श्वयक्षिणीं संस्थाप्य बाह्य चतुर्दिक्षु ॐ ब्रह्मणे नमः, ॐ धरणेन्द्राय नमः, ॐ नागाय नमः, ॐ पद्मावत्यै नमः, संलिख्य बाह्ये षोडश स्वरानावेष्टयेत्। वहिरष्टपत्रेषु ॐ ह्रीं श्रीं १ नमिऊण २ पासनाह ३ विसहर ४ वसह ५ जिण ६ फुलिङ्ग ७ ह्रीं नमः ८ संलिख्य, तद्वहिरष्टपत्रेषु ॐ नमो अरिहंताणं ह्रीं नमः, ॐ [नमो] सिद्धाणं ह्रीं नमः, ॐ [नमो]आयरियाणं ह्रीं नमः, ॐ [नमो]उवज्झायाणं ह्रीं नमः, ॐ नमो

---

१ 'नन्तरीं वुट्ठ अट्ठार' इति ख-पाठः।

लोए सव्वसाहूणं ह्रीं नमः, ॐ ज्ञानाय ह्रीं नमः, ॐ दर्शनाय ह्रीं नमः, ॐ चारित्राय ह्रीं नमः आलिख्य, तद्वाह्ये षोडशपत्रेषु षोडशविद्यादेव्या नामानि, तद्यथा-रोहिण्यै नमः, प्रज्ञप्त्यै०, वज्रशृङ्खलायै०, वज्राङ्कुश्यै०, अप्रतिचक्रायै० पुरुषदत्तायै०, काल्यै०, महाकाल्यै०, गौर्यै०, गान्धार्यै०, सर्वास्त्रमहाज्वालायै०, मानव्यै०, वैरोट्यायै०, अच्छुप्तायै०, मानस्यै०, ॐ ह्रीं महामानस्यै०, नमोऽन्तं [1]सर्वत्र द्रष्टव्यम् । तद्बाह्ये चतुर्विंशतितीर्थङ्करजननीनामानि । तद्यथा—ॐ ह्रीं मरुदेव्यै नमः, विजयायै०, सेनायै०, सिद्धार्थायै० मङ्गलायै०, सुसीमायै० पृथिव्यै०, लक्ष्मणायै रामायै०, नन्दायै० वैष्णव्यै०, जयायै०, श्यामायै०, सुजसायै०, सुव्रतायै० अचिरायै०, श्रियै०, देव्यै०, प्रभावत्यै०, पद्मावत्यै०, वप्रायै०, शिवादेव्यै०, वामादेव्यै०, ॐ ह्रीं त्रिशलाय नमः, ॐ नमोऽन्तं [2]सर्वत्र द्रष्टव्यम् । तद्बाह्ये षोडशपत्रेषु—ॐ इन्द्राय नमः, ॐ जयायै ह्रीं नमः, ॐ अग्नये ह्रीं नमः, ॐ अजितायै ह्रीं नमः ॐ यमाय ह्रीं नमः, ॐ अपराजितायै ह्रीं नमः, ॐ नैर्ऋताय ह्रीं नमः, ॐ जम्भायै नमः, ॐ वरुणाय नमः ॐ मोहायै नमः, ॐ वायवे नमः, ॐ वीरायै (?) ह्रीं नमः, ॐ कुबेराय नमः, ॐ नारायणाय नमः, ॐ ईशानाय नमः, ॐ विजयायै ह्रीं नमः, आलिख्य, तद्बहिरष्टपत्रेषु ॐ आदित्याय नमः, ॐ सोमाय नमः, ॐ मङ्गलाय नमः, ॐ बुधाय नमः, ॐ बृहस्पतये नमः, ॐ शुक्राय नमः, ॐ शनैश्चराय नमः ॐ राहुकेतुभ्यो(भ्यां) नमः ।

बाह्ये मायाबीजं त्रिगुणं वेष्टयेत्, माहेन्द्रमण्डलं वज्राङ्कितं चतुष्कोणेषु लिकारमालिख्य अस्य यन्त्रस्य सन्धिमूलमन्त्रेण ह्रीं श्रीं क्लीं क्रों प्रां क्लें न्नूं अर्हं नमः । ॐ नमो भगवओ अरिहओ पासस्स सिज्झउ मे भगवई महाविज्जा उग्गे महाउग्गे जसे पासे सुपासे २ पसामालिनि ठः ३ स्वाहा । एयाए विज्जाए गामं नगरं पट्टणं कव्वडं घरं खित्तं विवरं सुदागारं बहुह [3]कुमयाभिधूयं दारं वा लेगं गिरं निरोगं माणुसं बहुदव्वं सुपीणा सुसा-

1-2 ' सर्वेषु ' इति ख-पाठः । ३ ' कमं चाभिधूयं दारं वा लेम गिरं नीरोगं माणुसं ' इति ख-पाठः ।

वहेवरु । ॐ वम्माएवि ! सपुत्ति ! सवाहणि ! सअपरिकरं मज्झं आगच्छ २ अत्र स्थाने तिष्ठ तिष्ठ स्वाहा ।

**आह्वानमन्त्रानन्तरं द्वितीयं वृहच्चक्रं कल्पानुसारेण चिन्तामणिनामचक्रस्य सम्बन्धि विस्तरेण बीजाक्षरं दर्शयन्नाह-**

अष्टारमष्टवलयारमध्ये ॐ ह्रीं श्रीं वां हं ह्रूं क्ष्रूं ह्लीं ह्रीं व्रां श्रीं ॐ वां ऐं ह्रीं वां क्ष्रीं वा हं सं वमलवरयूं वा मध्यभागे हुंकारे नामगर्भितमालिख्य वाह्ये चतुर्दलेषु पार्श्वनाथं संलिख्य वाह्ये ह्रींकारं ( सं ) वेष्ट्य त्रिगुणं वहिरष्टकोणोपेतं चक्रमालिख्य कोणेषु ब्रह्माणं च ममलवरयूं धरणेन्द्राय धमलवरयूं नागान् नमलवरयूं संलिख्य पद्मावतीं यमलवरयूं संलिख्य वाह्ये ह्रीं ॐ ह्रः ३ ह्यदेवत्राभयहरत्रात्र ॐ ह्रीं (ज्रीं ?) सं हं सः यः ३ क्षिप स्वाहा । ह्रीं ह्रौं संवेष्टय वाह्ये पोडशकमलमध्ये पोडश स्वरान् संलिख्य प्रथममध्यदले द्रौं द्रौं संलिख्य ऊर्ध्वभागे दलाग्रे ॐ ह्रीँ श्रीँ नमिऊण पासनाह विसहरवसहजिणफुलिंग ह्रीँ श्रीँ नमः । पुनरपि वाह्ये कमलमध्येषु ॐ नमो अरिहंताणं ह्रीं नमः, ॐ[नमो] सिद्धाणं ह्रीं नमः, ॐ नमो आयरियाणं ह्रीं नमः, ॐ नमो उवज्झायाणं ह्रीं नमः, ॐ नमो लोए सव्वसाहूणं ह्रीं नमः, ॐ नमो ज्ञानाय ह्रीं नमः, ॐ दर्शनाय ह्रीं नमः,, ॐ चारित्राय ह्रीं नमः. विदिगरेषु [ ॐ ] उवसग्गहरं पासं १ पासं २ वंदामि ३ कम्मघणमुक्कं ४ विसहर ५ विसनिन्नासं ६ मंगलकल्लाण ७ आवासं ८ स्वाहा इति संलिख्य, ततो वाह्ये अनन्तकुलिकवासुकिशङ्खपालतक्षककर्कोटपद्ममहापद्म ॐकारपूर्वं नमोऽन्तमालिख्य विदिगरेषु ॐ विसहरफुलिंगमंतं १ कंठे धारेइ २ जो सया २ मणुओ ४ तस्स गह ५ रोगमारी ६ दुट्ठजरा जंति ७ उवसामं ८ स्वाहा संलिख्य, पुनरपि वाह्ये षोडशविद्यादेव्या नामानि षोडशदलेषु ऐं ह्रीं क्लीं रोहिण्यै नमः (एवं) सर्वेषु द्रष्टव्यानि । पुनरपि वाह्ये तीर्थङ्करजननीनामानि मरुदेव्यादीनि दलेषु प्रत्येकं २ ॐ ह्रीं नमोऽन्तं संलिख्य वाह्यदलेषु प्रत्येकं २ इन्द्राग्नियमनिर्ऋतवरुणवायव्यकुबेरईशाननागान् ब्रह्माणं ॐकारपूर्वं नमोऽन्तं संलिख्य विदिगरेषु चिट्ठउ १ दूरे मंतो २ तुज्झ पणामो वि ३ बहुफलो होइ ४ नरतिरिएसु ५ वि जीवा ६ पावंति न ७.

दुक्खदोहग्गं ८ स्वाहा इति संलिख्य बाह्ये चतुर्विंशतिदलेषु आदित्य–जया सोम–अजिता, मङ्गल–अपराजिता, बुध–जम्भा, बृहस्पति–मोहा, शुक्र–गौरी, शनैश्चर–गान्धारी, राहु–केतू संलिख्य विदिगरेषु तुह सम्मत्ते लद्धे १ चिन्तामणि २ कप्पपायवब्भहिए ३ पावंति ४ अविग्घेणं ५ जीवा ६ अयरामरं ७ ठाणं ८ स्वाहा संलिख्य उं (ॐ?)वामादेवि ! [1]महावाहणि ! सपरिकरि ! मह्नि आगच्छ २ अत्र स्थाने तिष्ठ २ स्वाहा । मायाबीजं त्रिगुणं (सं)वेष्ट्य माहेन्द्रवज्राङ्कितस्य तु चतुष्कोणेषु क्षिकारं देयं । चक्रं कुङ्कुमगोरोचनया सुगन्धद्रव्यैर्भूर्जपत्रे संलिख्य श्वेतवस्त्रैश्चन्दनाभरणादिभिर्निरन्तरं त्रिसन्ध्यं ध्यायन् अष्टोत्तरशतपुष्पैर्जापः क्रियते सर्वसम्पत्करणम् । कुङ्कुमगोरोचनया सुगन्धद्रव्यैर्भूर्जपत्रे संलिख्य कण्ठे धारणीयम् । सर्वभयरक्षां करोति । द्वितीयचक्रमिति ॥ २ ॥

इदानीं चिन्तामणिवृहद्यन्त्रकानन्तरं शुभाशुभं यन्त्रं सप्रपञ्चमाह–

चिट्ठउ दूरे मंतो तुज्झ पणामो वि बहुफलो होई ।
नरतिरिएसु वि जीवा पावंति न दुक्खदोहग्गं ॥ ३ ॥

अस्य व्याख्या –तिष्ठतु–आस्तां दूरे–व्यवहितदेशे रमणीयमित्यर्थः । नमस्कारसम्बन्धी ॐ ह्रीं हं नमो अरिहंताणं ह्रीं नमः । त्रिसन्ध्यं निरन्तरं अष्टोत्तरशतश्वेतपुष्पैरेकान्तस्थानेन जापेन क्रियमाणेन सर्वसम्पत्करी लक्ष्मीर्भवति । अथवा ध्यायेत(ध्यानेन?) हरहासकाशशङ्खगोक्षीरहारिणी(णा) हारकुन्देन्दुधवलनिबद्धं हत्पुण्डरीके मनसि धृत्वा धारणं सञ्जाता तत्प्रत्येकान्तासमापूरितध्याननिरुद्धाः करणवृत्तयः आविर्भूतस्वरूपाः । पुण्य इवार्थनिष्पाराः सञ्जातसमाधिविद्विती अमूर्धानाहद्ध संयमक्षतमन्तमूर्धानं त्रिकालं सर्वसम्पत्करी ईप्सितफलदायिनी सर्वकल्याणकारिणी ध्यानमित्युच्यते । नव–भवतः प्रणामः–प्रह्वीभाव इत्यर्थः । बहुफलः–प्रचुरफल इत्यर्थः । भवति–विद्यते । नरा–मनुष्याः तिर्यक्ष्वपि जीवाः–प्राणिन इत्यर्थः । प्राप्नुवन्ति–आसादयन्ति न दुःखदौर्भाग्यमिति–पीडा[2]भव्योमयमिति गाथार्थः । अपि–शब्दोऽत्र समुच्चयार्थः ।

१ 'महाविहा (विद्या) वाहणि' इति ख-पाठः। २ 'बालभव्योमभय०' इति ख-पाठः ।

यन्त्रं सूच्यते । अस्य भावमाह–ह्रींनामगर्भितस्य बहिरष्टदलेषु ह्रीं क्लूं ह्रीं ४ देवदत्तं ४ दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनादिसुगन्धद्रव्यैर्भूर्जपत्रे संलिख्य नारीबाहौ धारणीयम् । वन्ध्या गुर्विणी भवति, मृतवत्सा गर्भं धारयति, काकवन्ध्या प्रसवति, सर्वभूतपिशाचरक्षा (च)भवति(१) । वंकारनामगर्भितस्य बाह्ये षोडश स्वरान् वेष्टयेत् । ॐ ह्रां ह्रीं चामुण्डे! स्वाहा । आवेष्टय बाह्ये वलं २ पूरयेत् । एतद् यन्त्रं तु कुङ्कुमादिसुगन्धद्रव्यैः भूर्जपत्रे संलिख्य बाहौ धारणीयम् । बालग्रहरक्षा भवति(२) । मायाबीजत्रिगुणं नामगर्भितस्य बहिरष्टदलेषु ह्रीं दे इत्यादि दातव्यम् । एतद् यन्त्रं भूर्जे कुङ्कुमगोरोचनया आलिख्य स्त्रीपुरुषबाहौ धारणीयम् । सौभाग्यं भवति(३) । वंकारं नामगर्भितस्य बहिश्चतुर्दलेषु वंकारं दातव्यम् । बहिरष्टपत्रेषु रकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य(ते)क्षुद्रोपद्रवोपसर्गदोषा [१]उपशाम्यन्ति । आ(वे?)रोटथानामविद्या(४)। ह्रींनामगर्भितस्य बहिरष्टपत्रेषु देयं हमल्व्र्यूं ह्रीं दातव्यम् । एतद् यन्त्रं गोरोचनया भूर्जपत्रे संलिख्य कण्ठे हस्ते वा बद्ध्वा चौरभयं न भवति (५) । अघोरा नाम विद्या । ह्रींकारनामग[२]र्भितस्य बहिरष्टदलेषु मायाबीजं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य बाहौ धारणीयम् । सौभाग्यं भवति (६) । मायागर्भितस्य बहिरष्टपत्रेषु ह्रींकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य बाहौ धारणीयम् । सर्वजनप्रियो भवति (७) । मायानामगर्भितस्य बहिरष्टपत्रेषु रकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे विलिख्य(ते) बालानां शान्तिपुष्टिकरी रक्षा भवति(८)। मायाबीजं नामगर्भितत्रिगुणं (सं)वेष्टय बहिरष्टपत्रेषु ह्रींकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे आलिख्य कण्ठबाहुभ्यां धारयेत् । आयुषः अपश्रितज्वरभूतपिशाचस्कन्दोपस्मारग्रहगृहीतस्य बन्दे तत्क्षणादेव शुभं भवति(९) । ह्रां [ह्रीं] श्रीं ह्रीं श्रीं ह्रीं नामगर्भितस्य बाह्ये षोडशपत्रेषु ह्रीं श्रीं ठकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे विलिख्य(ते) दुर्भगनारीणां सौभाग्यं करोति (१०) ॥ ३ ॥

१ 'उपशमयन्ति' इति ख-पाठः । २ 'विदर्भितस्य' इति ख-पाठः ।

इदानीं पञ्चनमस्कारस्मरणीयफलं सप्रपञ्चमाह —

तुह सम्मत्ते लद्धे, चिंतामणिकप्पपायवब्भहिए ।
पावंति अविग्घेणं जीवा अयरामरं ठाणं ॥ ४ ॥

व्याख्या—' प्राप्नुवन्ति ' लभन्ते । के ते कर्तारः ? ' जीवाः ' प्राणिनः । किं कर्मतापन्नम् ? ' अजरामरं स्थानं ' शाश्वतं धवलं गोक्षीर-कुन्देन्दुशङ्खहारसंकाशं सिद्धिक्षेत्रं रमणीयमित्यर्थः । पुनरपि कथम्भूतम् ? ' अविघ्नेन ' निर्विघ्नेन । कस्मिन् ? तुह सम्मत्ते लद्धे' तव सम्यक्त्वे लब्धे सति-सम्यग्दर्शने प्राप्ते । कीदृशे ? 'चिन्तामणिकल्पपादपाभ्यधिके' चिन्तारत्नानेकप्रकारार्णववज्रवैडूर्यमहानीलकर्केतनपद्मरागमरकतपुष्परागचन्द्रकान्तरुचकमेचकाद्यनर्घ्यरत्नराशिपरिपूरितावित्यर्थः ।( परिपूरयिता इत्यर्थः ) कल्पवृक्षसुसमधिके । [ कल्पवृक्षस्य ] दश प्रकारा दृश्यन्ते । उक्तं च—

' चत्तारि सागरोव[1]मकोडाकोडीण संतई काले ।
एगंतसुसमा खलु जिणेहिं सव्वेहिं निद्दिट्ठा ॥ १ ॥
तीइ पुरिसाणमाऊ तिन्नि [2]उ पलियाइं तह [3]परीमाणं ।
तिन्नेव गाउआइं आईए [4]भणइ समयन्नू ॥ २ ॥
उवभोगपरीभोगा जम्मंतरसुकयबीयजाया उ ।
कप्पतरुसमूहाओ होंति किलेसं बिना तेसिं ॥ ३ ॥
ते पुण दसप्पयारा निद्दिट्ठा समणसमयकेऊहिं ।
धीरेहिं[5] कप्पतरुणो[6] रकारवासरमामया (!) एए ॥ ४ ॥
मत्तंगया य भिंगा तुडियंगा दीवजोइचित्तंगा ।
चित्तरसा मणियंगा गेहागारा य [7]अणियकत्ता ॥ ५ ॥

---

१ ' कोडिकोडीउ संतईए उ एगंत सुसमा ' इति पाठोऽवतारितो नन्दीसूत्रस्य श्रीमलयगिरिसूरिकृतायां वृत्तौ १९६ तमे पत्रे । २ 'य', ३ 'पमाणं च', ४ 'भणंति', ५. 'कप्पतरू'. ६ 'विनिद्दिठा मणोरहपूरगा ७ 'अकिय( गि )णा य'

[1]मत्तंगएसु मज्जं सुहपेज्जं भायणाणि भिंगेसु ।
तुडियंगेसु य संगय (सयग्रं) तुडियाणि वहुप्पयाराणि ॥ ६ ॥
दीवसिहा जोइसनामया य निच्चं करेंति उज्जोयं ।
[2]चियन्नणसु (चित्तगेसु) य मल्लं चित्तरसा भोयणट्ठाए ॥७॥
मणियंगेसु य भूसणवराणि भवणाणि भवणरुक्खेसुं ।
[3]अणियतेसु णियपत्थववत्थाणि वहुप्पयाराणि ॥ ८ ॥
एएसु य अन्नेसु य नरनारिगणाण [4]भायणवसुभोगा ।
भविचपुणब्भवरहिया इय सव्वन्नू जिणा वेंति ॥ ९ ॥

इत्यादयः कस्य सम्बन्धी(थिनः) न भवन्ति इति गाथार्थः ॥ ४ ॥

**इदानीं स्तुतेः उपसंहारमाह—**

इय संथुओ महायस ! भत्तिब्भरनिब्भरेण हियएण ।
ता देव ! दिज्ज बोहिं, भवे भवे पासजिणचंद ! ॥ ५ ॥

**व्याख्या**—संस्तवः-संस्तवनम् । कोऽसौ ? महायशः—महाकीर्तिः । पुनरपि कथम्भूतेन ? 'भक्तिभरनिर्भरेण हृदयेन' वहुमानसमन्वितेन चेतसा । कथमिति ? अमुना प्रकारेण पर्यन्तं शान्तिकपौष्टिकयन्त्रमन्त्र उच्यते । तस्मादेव हि बोधिः । यस्मादेवं तस्माद् वेति । देव ! कं कर्मतापन्नं ? वोधिम्–सम्यक्त्वं भवे भवे **पार्श्वजिन**चन्द्र ! जन्मनि जन्मनि श्रीपार्श्वनाथ !, स्वामिनो नामग्रहणेन क्षुद्रोपद्रवनाशनमिति गाथार्थः ॥

---

१ 'गाराणि', २ 'चित्तेसु', ३ 'आइण्णे (अणिगिणे)सु य इच्छियवत्थाणि वहुप्पगाराणि', ४ 'ताणसुवभोगा' इति तत्रत्यानि पाठान्तराणि। स्थानाङ्गवृत्तौ ५१७तमे पत्रेऽपि सप्तमाष्टमनवमा गाथाः कतिपया विद्यन्ते, तद्गतविशिष्टपाठान्तराणि एवम्–* 'मत्तंगेसु य मज्जं संपज्जइ', * 'आइन्नेसु य धणियं वत्थाइं'।

५ 'देसु बोहि' इति पाठान्तरम् । ६ 'चंदो' इति ख–पाठः ।

अस्य भावमाह–चक्रं हूं यः, क्षिलामगर्भितस्य बहिः ठकारं वेष्टयेत्। बहिः षोडश स्वरानावेष्टय बहिरष्टदलेषु पार्श्वनाथाय ह्रीं श्रीं स्वाहा । पृष्ठद्वादशपत्रेषु हर २ दातव्यम् । मध्ये क्लीं क्ष्वीं हं सः वेष्टयेत् । बाह्ये हकारं युगसम्पुटस्थं बहिः पवर्णं युगसम्पुटस्थं बहिः क्षीकारं त्रिगुणं वेष्टयम् । एतद्यन्त्रस्य तन्त्रं ॐ ह्रूँ वं ह्वां पक्षि ह्रीं क्ष्मीं हं सः स्वाहा । एतन्मन्त्रेण श्वेतपुष्पैरष्टोत्तरशतप्रमाणं दिनत्रयं यन्त्रं पूजयेत् । शान्तिक-पौष्टिकज्वररुक्शाकिनीभूतप्रेतराक्षसकिन्नरप्रभृतीन् नाशयति । यन्त्रं शुभद्रव्यैः भूर्जपत्रे संलिख्य कुमारीसूत्रेणवेष्ट्य बाहौ धारणीयम् । सर्वकल्याणसम्पत्कारि यन्त्रं भवति ॥

द्विजपार्श्वदेवगणिविरचिते यत् किमपि ( विरुद्धं ) श्रीधरणेन्द्रपार्श्व-यक्षपद्मावतीप्रमुखाभिः स्वदेवताभिर्मम क्षमितव्यमिति । यच्च किञ्चिद् [1]विरुद्धं मन्त्रमितः सर्वस्य मिथ्यादुष्कृतमिति ॥ ५ ॥

इति उपसर्गहरस्तोत्रस्य वृत्तिरियम् ॥ छ ॥ श्रीरस्तु ॥ मङ्गलं ॥ छ ॥ श्री ॥

---

१ 'रु यंत्रं मंसित (?)' इति ख-पाठः ।

२ 'वृत्तिः समाप्ता ॥ संवत्सरे विक्रमनृपतौ सप्त-नन्द-काय-भू, १६९७ )-युते वर्षे आश्विनमासे शुक्लपक्षे दुर्गाष्टम्यां तिथौ लिखितं जगजीवर्षिणा स्वात्महेतवे । कल्याणमस्तु । भव्यं भवतु ।

अक्खरमत्ताहीणं जं मया लिहियं अयाणमाणेणं ।
तं (ख)मइ मुज्झ सामी जिणिंदमुहनिग्गया वाणी ॥ १ ॥

श्राल्दुर्गे स्थिते सति लेप( ख )क-पाठकयोर्जयः' इति ख-पाठः ।

[ २ ]

## श्रीमानतुङ्गसूरिप्रणीतं 'नमिऊण' पराभिधानं

# भयहरस्तोत्रम् ।

नमिऊण पणयसुरगणचूडामणिकिरणरंजिअं मुणिणो ।
चलणजुअलं महाभयपणासणं संथवं वुच्छं[1] ॥ १ ॥

वृत्तिः ।

सिद्धार्थपार्थिवसुतं सिद्धार्थं सिद्धशासनं वीरम् ।
नत्वा चरमजिनेन्द्रं भयहरवृत्तिं भणिष्यामि ॥ १ ॥

'नमिऊण०' नत्वा चरणयुगलम् । कस्य ? 'मुनेः' पार्श्वनाथस्य । प्रणतसुरगणचूडामणिकिरणरञ्जितम् । महाभयप्रणाशनं संस्तवं वक्ष्ये ।

इत्यक्षरार्थः १ ।

सम्प्रदायः प्रोच्यते—

हुंकारे देवदत्तनामालिख्य वहिरष्टाम्बुजं विधेयम्, दलेषु ॐ श्री पार्श्वनाथाय स्वाहा प्रत्येकं संलिखेत्, बाह्ये षोडशस्वरैर्वेष्टयेत् ।

इदं चक्रं कुङ्कुमगोरोचनादिसुरभिद्रव्यैर्भूर्जपत्रेषु शुभेऽह्नि संलिख्य कुमारीसूत्रेणावेष्ट्य सहस्रवारजापः, त्रिकोणकुण्डे होमः क्रियते, सहस्र १२, तद्दिने उपोषणः क्रियते । तद्दिने दानादिकं दीयते । श्रीपार्श्वनाथविम्बे पूजा । पश्चात् शुभदिने वाहौ धारणीयम् । महाभयहरं भवति ।

पूजाविधिः—

सोपारी १२, मुद्रा १, आच्छादन वस्त्र पुष्पादि । [आद्यं यन्त्रमिदम्॥१॥]

पुनः द्वासप्ततिशतं यन्त्रं प्रारभ्यते—

चतुःस्थाने अजित–शान्ति–पार्श्व–वर्द्धमानाः । ॐ रोहिण्यादिषोडश विद्यादेवी, मध्यकोष्ठके क्षिप ॐ स्वाहा इति, वर्णोपरि च

---

१ वोच्छं क–पाठः ।

" वरकनक–शङ्ख–विद्रुम–मरकत–घनसन्निभं विगतमोहम् ।
सप्ततिशतं जिनानां सर्वामरपूजितं वन्दे ॥ १ ॥
ॐ भवणवइ – वाणवन्तर – जोइसवासी विमाणवासी यं ।
जे केवि दुट्ठदेवा ते सव्वे उवसमंतु मम स्वाहा ॥ "

इत्यालिख्य गृहे पूज्यमानं शान्तिदायकं भवति । इदं सप्ततिशतं यन्त्रम् ॥ २ ॥

तथा 'ॐ कालाक्षिपतये स्वाहा' अनेन प्रसूतिसमये तैलमभिमन्त्र्य योनौ क्षिपेत् सुखं प्रसूते । [ द्वितीयं यन्त्रम् ॥ २ ॥ ]

'ॐ घण्टाकर्ण ! महावीर ! सर्वव्याधिविनाशक ! ।
विस्फोटकभये प्राप्ते रक्ष रक्ष महाबल ! स्वाहा ॥'

गृहो स्मरे (?) गेहे लिखितं पूजितं विस्फोटकभयं नाशयति ॥

प्रथमं षट्कोणचक्रमालिख्य मध्ये ह्रींकारोदरे नाम दत्त्वा तदुपरि ॐकारं दत्त्वा ॐ २५, ह्रीँ ८० ह्ः १५ क्षं ५० शुं २० सः ४५, द ३०, ॐ ७५, ॐ ७० ह्रीँ ३५ । हुँ ६० क्षं ५ सुं ५५, रा १० हुँ ६५ ह्रीँ ४० इति यन्त्रमालिख्य

'ॐ ह्राँ श्रीँ नमिऊण विसहर वसह जिणफुलिंग ह्रीँ नमः' इति मूलमन्त्रेण वेष्टयित्वा बहिरैन्द्रपुरं वज्राङ्कितं चतुरस्रमालिख्य यन्त्रं पूजयेत् सर्वकार्यसाधकोऽयं यन्त्रः ॥ वृद्धसप्ततिशतं यन्त्रम् । [तृतीयं यन्त्रम् ३ ]

वायुकोणेषु ह्रीँ दत्त्वा ॐ कुरुकुल्ले ! स्वाहा मन्त्रेण वेष्टनीयम्, पुनरपि बहिः अ आ इत्यादि क्षकारपर्यन्तया मात्रिकया वेष्टयेत् । बाह्ये—

"ॐ त्रिशूलिनीं प्रेतकपालहस्तां नृमुण्डमालावलि...कङ्कणाम् ।
कलान्त्रहारां रुधिरौघसंप्लुतां त्वामेव रौद्रीं सततं स्मरामि ॥"

इत्यनेन वेष्टनीयम् इदं यन्त्रम् । [ चतुर्थं यन्त्रम् ४ ]

सडियकरचरणनहमुहनिवुड्डनासा विवण्णलायण्णा ।
कुट्ठमहारोगानलफुलिंगनिद्दड्ढसव्वंगा ॥ २ ॥
ते तुह चलणाराहणसलिलंजलिसेअवड्ढिउच्छाहा ।
वणदवदड्ढा गिरिपायव व्व पत्ता पुणो लच्छि ॥३॥ युग्मम् ॥

वृत्तिः ।

[1]अप्रतिचक्रे । कुरु कुरु मपायन्तमदायंतमपि स(म)र्पित ह्रीँ ह्रूँ क्ष्रूँ ॐ सः ठः ह्री नमोऽस्तु ते विचक्राय स्वाहा । अनेन मन्त्रेण संपूज्य बाहौ धृतं ज्वालागर्दभ-शीतलिका-लूता-विस्फोटिका-दन्ती-कीटकान्नाशयति ॥१॥ [ पञ्चमं यन्त्रम् ५ ]

**[1]सडिय०, ते तुह०,** व्याख्या—

शटितकरचरणनखमुखनिमग्ननाशाविवर्णलावण्याः । कुष्ठमहारोगानलस्फुलिंगनिर्दग्धसर्वाङ्गाः । ते तव चरणाराधनसलिलाञ्जलिसेकवर्द्धितोत्साहाः गिरिदवदग्धा गिरिपादपा इव प्राप्ताः पुनर्लक्ष्मीम्

इति गाथायुगलार्थः ॥ २ । ३ ॥

**सम्प्रदायः प्रोच्यते—**

श्रीँकारगर्भं नाम कृत्वा वहिरष्टपत्रेषु श्रीँकारमेव दद्यात् । ततस्त्रिध मायाबीजेन वेष्टयेत् । [ षष्ठं यन्त्रम् ६ ]

तथा हरिप्रियाक्षरे स्वं नाम कृत्वा वहिश्चतुर्दलेषु प्रत्येकं श्रीँ श्रँ चेति दातव्यम् । उपरि मायाबीजेन वेष्टनीयम् । [ सप्तमं यन्त्रम् ७ ]

पार्श्वं श्री (श्रीँ) नाम नामगर्भितस्य बहिरष्टपत्रे पत्रे ।

तथा श्रीँकारादिषु ॐ ह्रीँ श्रीँ पार्श्वनाथाय नमः इति प्रत्येकं दातव्यम् । तदुपरि षोडशस्वराणां वेष्टकाः कार्याः । [ अष्टमं यन्त्रम् ८ ]

---

1 वुड्ढियच्छाया क-पाठः ।

तथा ॐ दे श्रीँ व ह्रीँ द श्रीँ स इति कल्पनां कृत्वा बहिरष्टपत्रं कमलं विधाय, कमलदलेषु ॐ ह्रीँ पार्श्वनाथाय ह्रीँ नमः इति दत्त्वा ॐ ह्रीँ श्रीँ भगवते श्रीपार्श्वनाथाय हर हर स्वाहा इति मन्त्रेण सर्वतो वेष्टना कार्या । त्रिगुणमायाबीजमुपरि देयम् । [ नवमं यन्त्रम् ९ ]

तथा श्रीँकारोदरे नाम कृत्वा बाह्ये द्वादशच्छदमम्बुजं विधाय पदे पदे ॐ ह्रौँ श्रीँ इत्यक्षरद्वयं दत्त्वा उपरि स्वरैरावेष्ट्य तदुपरि त्रिगुणमायाबीजं देयम् । [ दशमं यन्त्रम् १० ]        इति यन्त्रपरिकल्पना ।

**अमीषां पञ्चानामपि यन्त्राणां विधिरयम्—**

कुङ्कुमगोरोचनादिसुरभिद्रव्यैर्भूर्जपत्रे लिखित्वा कुमारीसूत्रेणावेष्ट्य कण्ठे बाहौ वा धारणीयम् । अल्पमृत्यु-ज्वरा-ऽपस्मार-भूत-प्रेत-पिशाचाऽऽदिरक्षा यथासङ्ख्यं भवति । पूजामन्त्रोऽयम्—

ॐ ह्रीँ श्रीँ भगवते श्रीपार्श्वनाथाय हर हर स्वाहा ।

अस्य पूर्वसेवायां जापो दश सहस्राणि देयो दक्षिणकरेण, ततोऽष्टोत्तरशतपुष्पैरनेन मन्त्रेण पूजा कार्या ॥

**जलभयापहारमाह—**

दुव्वायखुभिअजलनिहिउब्भडकल्लोलभीसणारावे ।
संभंतभयविसंठुलनिज्जामयमुक्कवावारे ॥ ४ ॥
अविदलियजाणवत्ता खणेण पावंति इच्छिअं कूलं ।
पासजिणचलणजुअलं निच्चं चिअ जे नमंति नरा ॥५॥ युग्मम्॥

व्याख्या—

दुर्वातक्षुभितजलनिधौ उद्भटकल्लोलभीषणारावे ।
सम्भ्रान्तभयविसंस्थुलनिर्यामकमुक्तव्यापारे ॥
अविदलितयानपात्राः क्षणेन प्राप्नुवन्तीप्सितं स्थानम् ।
ये पार्श्वजिनचरणयुगलं नित्यमेव प्रणमन्ति नराः ॥

इति सङ्क्षेपादक्षरार्थः ।

इदानीमाम्नायो भण्यते—

हूँ ततो नाम, ततो क्ष्रौं (क्ष्रूँ) कृत्वा वाह्ये ठकारसम्पुटेनावेष्ट्य वहिरष्टदलं कमलमालिख्य ॐ ह्रौं पार्श्वनाथाय स्वाहा इत्यक्षराणि प्रतिदलं विन्यस्य स्वरैरावेष्टयेत् । ततः षोडशदलं कमलं पुनः कृत्वा दलेषु ह्रीँ दत्वा उपरि च ऐं ह्राँ ह्रीँ ह्राँ ह्रौँ क्ष्रीँ व्लूँ क्ष्रौँ ह्राँ ह्रीँ हुँ ह्रौँ ह्रः ठः ठः ठः इत्यक्षरैः सर्वतो वेष्टनीयम् । उपरि च रेखात्रयं दातव्यम् । न मायावीजम् । [ एकादशं यन्त्रम् ११ ]

इदं यन्त्रं कुङ्कुमादिद्रव्यैर्हरितालमिश्रैर्लिखितं, प्रधानपुष्पैरष्टाधिक-सहस्रसङ्ख्यैरार्चितं, प्रचुरनैवेद्यफलादि दत्त्वा आत्मसमीपे धारयितव्यं जलभयमपहरति प्रवहणिकवणिजां, नात्र सन्देहः ।

मन्त्रोऽयम् । तथा—ॐ इंदसेण महाविज्जा देवलोगाउ आगया । दिट्ठिवंधं करिस्सामि भंडाणं भोइआणं अहीणं [1]दिट्ठीणं चोराणं चारियाणं जोहाणं वग्घाणं सीहाणं सूआणं महोरगाणं गंधव्वाणं अन्नेसिं दुट्ठसत्ताणं दिट्ठिबंधणं [2]करिस्सामि इंदनरिंदे स्वाहा ।

अनया जाप्यमानया सर्वत्रापि भयं न भवति ।

तहा—ॐ भेलुषे मरौ मरौ रत्ता मत्ता चोरा मारहिं (मरेहिं) अंबींहिं जालाकरेहिं तालाहियए मुहे निलाडेहिं खिल्ला ॐ सेइ ॐ भेलुषे माए ठः ठः स्वाहा । तस्कररक्षामन्त्रोऽयम् ।

प्रथमं सहस्र १००८ जाप्यं । वार २१ कार्यसिद्धिः स्यात् । एषोऽपि पूर्वोक्तरीत्या गुरूपदेशतः साध्यः ॥

इतो जलभयानन्तरं ज्वलनभयापहारमाह—

---

१ °दट्ठीणं° क । २ °करेमि° क ।

खरपवणुद्धुअवणदवजालावलिमिलियसयलदुमगहणे ।
डज्झंतमुद्धमयवहुभीसणरवभीसणंमि वणे ॥ ६ ॥
जगगुरुणो कमजुअलं निव्वावियसयलतिहुअणाभोअं ।
जे संभरंति मणुआ न कुणइ जलणो भयं तेसिं ॥ ७ ॥

व्याख्या—

खरपवनोद्धूतवनदवज्वालावलिमिलितसकलद्रुमगहने ।
दह्यमानमुग्धमृगवधूभीषणरवभीषणे वने ॥
ये मनुजा जगद्गुरोः श्रीपार्श्वनाथस्य क्रमयुग्मम् ।
निर्वापितसकलत्रिभुवनाभोगं यो संस्मरन्ति न करोति ज्वलनो भयं तेषाम् ॥

इत्यक्षरार्थः ।

वृद्धसम्प्रदायश्चात्र—

प्रथममाग्नेयमण्डलं परिकल्प्य मध्ये श्रींकाराक्षरपूर्वं देवदत्त—नामालिख्य तदपि च अकाराक्षरैर्यथेष्टं वेष्टयेत् । उपरि षोडशस्वरैर्वेष्टनीयं, उपरि भागे त्रिगुणमायाबीजमित्येकं यन्त्रम् । [द्वादशं यन्त्रम् १२]

तथा प्रणवोभयसम्पुटं नामालिख्योपरि मायाबीजेनावेष्टय बहिरष्टपत्रे षोडश स्वराणि दत्वा क्ष्रीँ इत्यक्षरैः सर्व सर्वतो वेष्टयित्वा ठकारेण वेष्टनीयम् । उपरि निरन्तरं क्ष्रूँ इत्यक्षरं सर्वतो दापयेत् । ईकारेणोर्ध्वं वेष्टयित्वा माहेन्द्रमण्डले स्थापनीयम् । [ त्रयोदशं यन्त्रम् १३ ]

इति यन्त्रद्वयं कुङ्कुमादिद्रव्यैरालिख्य बाहौ धारणीयं प्रदीपनादिभयं रक्षति। ॐ ह्रीँ क्ष्रीँ ब्लूँ ठः ठः स्वाहा । अनेन मन्त्रेण अष्टोत्तरशतपुष्पैः पूजनीयम् । इदमपि च आकर्षणे आग्नेयमण्डलस्थं ताम्रभाजने कुन्टया लिखेत् । वैश्वानरेण तापयेत् । आग्नेयध्यानेन सप्तरात्रेण आकर्षयति ।

अथवा-हरितालेन भूर्ये लिखित्वा गृहद्वारे निखनेत् शत्रोः कार्याणि न सिद्धयन्ति । विशेषतः पुनरिदमपि कुङ्कुमगोरोचनया कनिष्टिकारक्तेनालिख्य बाहौ धारयेत्, परमत्र पार्थिवमण्डलं कर्तव्यम् ।

इति यन्त्रविधिः ।

अधुना मन्त्रसम्प्रदायः—

ॐ सुवर्णपक्षं वैनतेयं महाबलं ।

नागान्तकं जितारिं च अजितं विश्वरूपिणम् । कपिलजटाजूट रहि रहि ॐ क्रौँ अग्नि स्तम्भय स्तम्भय स्वाहा ।

मन्त्रोऽयं रक्तकणवीरपुष्पैर्जपनीयः त्रिसन्ध्यम् । सप्तदिनानि यावत्, ततस्तीरस्थमग्निमभिमन्त्रयेत् । तैलधारा दह्यते (दीयते) प्रदीपने काञ्जिकधारा देया ।

मन्त्रः—

ॐ नमो भगवते श्रीपार्श्वनाथाय हा हंसः अमृतहंसः वनदेवहंसः वा गृदेव हंसः हाँ हंसः अग्निं स्तम्भय स्तम्भय हुं फट् स्वाहा । एषोऽपि वन्हि स्तम्भयति ॥

एकविंशतिवारं काञ्जिकमभिमन्त्र्य धारां दद्यात् प्रदीपनके गृहं न दह्यते ॥

अधुना वन्हिस्तम्भनानन्तरं विषधरमन्त्रप्रतिपादकं गाथायुगलमाह—

विलसंतभोगभीसणफुरिआरुणनयणतरलजीहालं ।
उग्गभुअंगं नवजलयसत्थहं भीसणायारं ॥ ८ ॥
मन्नंति कीडसरिसं दूरपरिच्छूढ विसमविसवेगा ।
तुह नामक्खरफुडसिद्धमंतगुरुआ नरा लोए ॥ ९ ॥युग्मम्॥

व्याख्या—

मन्यन्ते कीटसदृशं उग्रभुजङ्गं नवजलदसच्छायं विलसद्भोगभीषणं स्फुरितारुणनयनतरलजिह्वं दूरपरित्यक्तविषमविषवेगाः तव नामाक्षरस्फुट-सिद्धमन्त्रगुरवो नरा लोके। इत्यक्षरार्थः।

प्रथममात्मरक्षा—

क्षिकारं वसुसङ्ख्यया पादाभ्यां पीतवर्णं न्यस्तव्यम्। ततः त्रयो-दशसङ्ख्यया पकारं श्वेतवर्णं नाभिपर्यन्ते न्यस्तव्यम्। ततः ॐकारमष्ट-संख्यं रक्तवर्णं हृदये कृष्णवर्णं वायुबीजं स्वाक्षरं मुखे धूम्रवर्णं, आकाश-बीजं हाक्षरं शिरसि न्यस्तव्यम्। तथा क्षिमङ्गुष्ठे, पकारं तर्जन्याम्, ॐकारं मध्यमायाम्, स्वाकारं अनामिकायाम्, हाकारं कनिष्ठिकायाम्। पुनरपि हाकारं इति प्रतिलोमतो न्यस्य वारत्रयं, ततो वासुकी-शङ्खपालावङ्गुष्ठे मस्तके-हृदये-मणिसहितौ न्यस्य अनन्त-कुलिकौ तर्जन्याम्, तक्षकमहापद्मौ मध्यमायाम्, कर्कोटक-पद्मौ अनामिकायाम्, जयविजयौ कनिष्ठिकायां विन्यस्य, पुनरपि हस्ततले सत्व रजस्तम इति त्रिकं त्रिकं सर्वाङ्गुलिपर्वसु न्यस्यते। हरहुंहः, सरसुंसः इत्यक्षराणि प्रणवाद्यानि सर्वा-ङ्गुलिमूर्धसु न्यस्यन्ते। एवं च त्रिपञ्चसप्तवारमात्मरक्षां कृत्वा ॐ नमो भगवओ अरहंत-सिद्ध-आयरिय-उवज्झाय-साहु-सव्वधम्मतित्थयराणं (स्स ?) ॥ १ ॥

ॐ नमो भगवईए सुअदेवयाए सव्वेसिं पवयणदेवयाणं दसण्हं दिसापालाणं पंचण्हं लोगपालाणं ऐं ह्रीँ श्रीँ नमः।

अनेन सप्ताभिमन्त्रितेन ग्रन्थिर्बन्धनीयः तस्करभयं न भवति। अन्येऽपि व्यालादयो दूरतो यान्ति।

ॐ नमो भगवओ पासासमिस्स जस्सेअं जलंतं गच्छइ चक्कं तेण चक्केण जं विसं, चउरासीवायाओ, बत्तीसं भूआइं, सत्तावीसं अंघगडाइं,

अट्ठावीसं लूयाओ ॐ हन हन दह दह पच पच मथ मथ छिन्द छिन्द भिंद भिंद सुदर्शनचक्रेण चन्द्रहासखड्गेन इदं सवज्रेण हुं फट् स्वाहा ।

अनेन गडादीनामुञ्जनं कार्यम् ।

तथा—ॐ पद्मे ! पद्माक्षि ! पद्मसुभगे ! हुं फट् चक्रे चक्राय स्वाहा । अक्ष्णोरुञ्जनं भस्मना कार्यम् । तथा—

ॐ सुदर्शनचक्रेण छिन्द छिन्द ठः ठः ठः कण्ठ–गलमालामन्त्रः । तथा—ॐ नमो भगवओ अरहओ पाससामिस्स सिज्झउ मे जलंतं गच्छइ चक्कं चक्कं सव्वत्थ अपराजिअं आयावणी ओहावणी मोहणी थंभिणी जम्भिणी हिलि हिलि कालि कालि अरीणं भंडाणं भोइयाणं अहीणं दट्ठीणं सिंगीणं चोराणं चारियाणं जक्खाणं रक्खसाणं पिसायाणं मुहं बंधामि दुट्ठगइबंधणं करिस्सामि ठः ठः ठः

एया एव चउत्थेण भूयतिहीए पाससामिस्स भवणे अट्ठुत्तरसयअक्खं अखंडजवाकुसुमेहिं वा तप्पमाणेहिं कायव्वो । पंथे भयपत्ताइयाणं उवगरणस्सयस्स संघस्स रक्खा कीरइ ।

एकविंशतिवारं जप्त्वा धूल्या प्रक्षेप्या सर्वभयहरी विद्या ।

**अधुना यन्त्रमुच्यते—**

प्रथमं ' देवदत्त ' नामालिख्यते, तदुपरि अष्टदलकमलं कृत्वा कमलदलेषु अनन्त–वासुकी–तक्षक–कर्कोटक–पद्म–महापद्म–शङ्ख–कुलिकेतिनामानि सृष्ट्या दलेषु न्यस्येत् । पश्चादुपरि संहारेण हा हैं हे हौं हु हू हैं हः । [ चतुर्दशं यन्त्रम् १४ ]

अपि च दलाग्र आलिख्य सुरभिद्रव्यैरर्चितं वामकरस्थितजलेनाच्छोटयेत्, यन्त्रं बाहौ ध्रियते सर्वविषापहारं करोति ॥

**इति पन्नगभयापहरणानन्तरं तस्करभयापहं गाथायुगलमाह—**

अडवीसु भिल्लतक्करपुलिंदसद्दूलसद्दभीमासु ।
भयविहुरवुन्नकायरउल्लूरियपहियसत्थासु ॥ १० ॥

अविलुत्तविहवसारा तुह नाह ! पणाममत्तवावारा ।
ववगयविग्घा सिग्घं पत्ता हियइच्छियं ठाणं ॥ ११ ॥

॥ युग्मम् ॥

व्याख्या—

प्राप्ता हृदयेप्सितं स्थानम्, किंविशिष्टाः ? अविलुप्तविभवसाराः, तव नाथ ! प्रणाममात्रव्यापाराः, व्यपगतविघ्नाः । शीघ्रम् । कासु ? अटवीषु । किंविशिष्टासु ?। भिल्ल-तस्कर-पुलिन्द-शार्दूलशब्दभीमासु । भयविह्वल-बुभ्रुक्षातरोल्लूरितपथिकसार्थासु । इत्यक्षरार्थः ।

अधुना वृद्धसम्प्रदायो दृश्यः—

एह अंबे गच्छामि पंथं बंधि दुपयं पंथं बंधि चउप्पयं घोरं आसी-विसं बंधे जाव न गंठीं मुंचामि ।

पंथे धूलीं जपित्वा दशस्वपि दिक्षु प्रतिक्षिपेत्, तस्करभयं न प्रभवति ।

तथा ॐ नमो अरिहंताण आभिणि मोहिणि मोहय मोहय स्वाहा । एषा मार्गे गच्छद्भिः स्मर्तव्या । तस्करदर्शनमपि न भवति ।

ॐ धनु धनु महाधनुर्धरी पद्मावती देवी सर्वेषां चौराणां सर्वदुष्टा-नामायुधं बन्ध बन्ध मुखस्तम्भं कुरु कुरु स्वाहा ।

एनया विद्यया मार्गे सप्त वारान् यष्टिमभिमन्त्रयेत्, पथि धनुषमा-लिखेत् चौरभयं न भवति । कूपान्तरं यावत् ।

ॐ नमो भगवते धरणेन्द्राय खड्गविद्याधराय धनुः खड्गं गृण्ह गृण्ह स्वाहा ।

अष्टोत्तरशतं श्वेतपुष्पैर्जपेत् दिनत्रयेण सिद्धिर्भवति । खड्गस्तम्भन-मन्त्रः ।

ॐ कुवेराय सुह(मह?)चौरं गृण्ह गृण्ह, स्थानं दर्शय दर्शय आगच्छ आगच्छ स्वाहा। आदित्यदिने दुग्ध भस्म करोटके क्षिप्त्वा रक्तकणवीर-पुष्पैः पूजयेत् अष्टोत्तरशतसङ्ख्यया कुमारीहस्तेन चम्पाव्यते यत्र चौरस्य नाम तत्र आगच्छति।

तथा ॐ देव ह्रीं दत्त हँ व्लूँ इत्यादि लिखित्वा वलकंवाग्रे ॐ ह्रीं हूँ स्वाहा इत्यक्षरैरुपरितो वेष्टनीयं तदुपरि अष्टदलकमलमालिख्य दिक्पत्रेषु चतुर्षु ॐनमो अरिहंताणं स्वाहा, कोणेषु ॐ ह्रीं हूँ नमः ह्रीं हः इति सर्वत्र पदानि न्यस्येत्। वहिस्त्रिगुणमायाबीजेन वेष्टनीयम्। [पञ्चदशं यन्त्रम् १५] कुङ्कुमादिसुरभिद्रव्यैरालिखितं रणे राजकुले मार्गे सर्वत्र भयं हरति।

मन्त्रश्चात्र—

ॐ नमो ह्रीं हँ (हूँ)अरिहंताणं नमः। अस्य मन्त्रस्य पूर्वसेवायां कर-जाप्येन द्वादश सहस्राणि जाप्यन्ते ततः सिद्ध्यति। सिद्धश्च सर्वकार्येषु रक्षाकरः।

यन्त्रस्याष्टोत्तरशतपुष्पैः पूजा कर्तव्येति।

**इति तस्करभयानन्तरं सप्रपञ्चं मृगारिभयरक्षां गाथाद्वयेमाह—**

पज्जलियानलनयणं दूरवियारियमुहं महाकायं।
णहकुलिसघायवियलियगइंदकुंभत्थलाभोअं॥ १२॥
पणयससंभमपत्थिवनहमणिमाणिक्कपडियपडिमस्स।
तुह वयणपहरणधरा सीहं कुद्धं पि न गणंति॥ १३॥

व्याख्या—

प्रज्वलितानलनयनं दूरविदारितमुखं महाकायम्।
नखकुलिशघातविदारितगजेन्द्रकुम्भस्थलाभोगम्॥
प्रणतससम्भ्रमपार्थिवनखमणिमाणिक्यपतितप्रतिमस्य।
तव वचनप्रहरणधराः सिंहं क्रुद्धमपि न गणयन्ति॥ इत्यक्षरार्थः।

सम्प्रदायश्चात्र—

सिंहादिभये प्राप्ते क्ष्लाँ म्लीँ म्लूँ म्लौँ म्लः इति पञ्चाङ्गुलि-पञ्चाक्षराणि पञ्चाङ्गुलिषु न्यस्यैकाग्रमानसैः म्लूँ मन्त्रं परिजप्य सम्मुखं पुष्पादि क्षेप्यम्। सिंहभयं न भवति, अपि प्रत्यनीको विलयमेति ।

तथा परप्रवादभयप्राप्तौ म्लौँ म्लाँ म्लीँ म्लूँ म्लः कराङ्ग-न्यासं कृत्वा म्लौँ मन्त्रं परवादजिह्वायां ध्यायमानमेकाग्रमानसैस्तेषां वाचम-पहरति । परविद्याविच्छेदे आतुरशरीरे ध्यातं परमन्त्रानपहरति ।

तथा शत्रुप्रतिकृतिं नदीउभयतटमृत्तिकया कृत्वा हरितालेन म्लौँ मन्त्रमालिख्य सलवणं तस्य हृदये निधाय उपरि पाषाणं दत्वा पादप्रहारेण ताडयित्वा धारयेत् सप्तरात्रेण शत्रुं वश्यमानयति ॥ १४ ॥

अधुना गजेन्द्रभयमाह—

ससिधवलदंतमुसलं दीहकरुल्लालवुड्ढिउच्छाहं ।
महुपिंगनयणजुअलं ससलिलनवजलहरारावं ॥ १४ ॥
भीमं महागइंदं अच्चासन्नंपि ते न वि गणंति ।
जे तुम्ह चलणजुअलं मुणिवइ ! तुंगं समल्लीणा ॥ १५ ॥

व्याख्या—

भीमं महागजेन्द्रमत्यासन्नमपि ते न विगणयन्ति । ते किं० ? ये समालीनाः तव चरणयुगं मुनिपते ! तुङ्गं समाश्रिताः । किंविशिष्टं गजेन्द्रम् ? शशिधवलदन्तमुशलं, दीर्घकरोल्लालवर्द्धितोत्साहम्, मधुपिङ्गनयनयुगलम्, ससलिलनवजलधरारावम् ॥ इत्यक्षरार्थः ।

पकारोदरे देवदत्तनामालिख्योपरि ह्रीँकारेण वेष्टयेत् । बाह्ये षोडश-स्वरैरावेष्टयेत्, तद्बाह्ये ॐ ह्राँ ह्रीँ चामुण्डे ! स्वाहा निरन्तरं वेष्टय वलयं पूरयेत् । उपरि मायाबीजं दत्वा यन्त्रं कारयेत् । [ षोडशं यन्त्रम् १६ ] इदं यन्त्रं कुङ्कुमगोरोचनया भूर्जे संलिख्य धारणीयं हस्तिभयं मुक्त-श्रेत्कारमसुरमपि न भवति ॥ १५ ॥

अधुना रणरक्षोच्यते—

समरम्मि तिक्खखग्गाभिघायपविद्धउद्धअकबंधे ।
कुंतविणिभिन्नकरिकलहमुक्कसिक्कारपउरम्मि ॥ १६ ॥
निज्जिअदप्पुद्धररिउ—नरिंदनिवहा भडा जसं धवलं ।
पावंति पावपसमिण ! पासजिण ! तुह प्पभावेणं ॥ १७ ॥

व्याख्या—

समरे तीक्ष्णखङ्गधाराभिघातप्रविद्धोद्धूतकबन्धे ।
कुन्तव्रणभिन्नकरिकलभमुक्तसीत्कारप्रचुरे ॥
निर्जितदर्पोद्धुररिपुनरेन्द्रनिवहा भटा यशो धवलम् ।
प्राप्नुवन्ति पापप्रशमन ! पार्श्वजिन ! तव प्रभावेन ॥ इत्यक्षरार्थः ।

वृद्धसम्प्रदाय इदानीम्—

मायाबीजगर्भ नाम कृत्वा ठकारेण वेष्टनीयं, बहिश्चतुर्दलेषु ह्रीँ पा १ ह्रीँ र्श्व २ ह्रीँ ना ३ ह्रीँ थ ४ अधः सृष्ट्या नाम दत्वा बहिरष्टपत्रं कमलमालिख्य कमलदलेषु स्फ्रँ इत्यक्षरं देयं, ततो मायाबीजेन त्रिर्वेष्टनीयम्। [ सप्तदशं यन्त्रम् १७ ]

इदं यन्त्रं सुरभिद्रव्यैरालिख्य बाहौ बद्धं ह्रीँ ह्रूँ स्फ्रूँ ह्म्ल्व्र्यूँ क्ष्म्ल्व्र्यूँ पार्श्वनाथाय ! स्वाहा । अनेन मन्त्रेण अष्टोत्तरसहस्रत्रयकुसुमैरर्चितं रणे काण्डघातनिवारणं करोति । नात्र संशयः कार्यः ।

तथा— पारदाचूरितां शस्तां संग्रामे च कपर्दिकाम् ।
गलिकां धारयेत् यस्तु काण्डवृष्ट्या न बाध्यते ॥

पूर्वोक्तमन्त्राभिमन्त्रितं । तथा—कटुतुम्बिनीमूलं दीपोत्सवदिनसन्ध्यायां नानीभूत्वा गृहीतं (को) लोहेनावेष्ट्य मुखे युद्धकाले कर्तव्यं असिमुशलकाण्डघातनिवारणं कुरुते ॥

इदानीं अष्टानामपि भयस्थानानां रक्षामाह—

रोगजलजलणविसहरचोरारिमइंदगयरणभयाइं।
पासजिणनामसंकित्तणेण पासमंति सव्वाइं॥ १८॥

व्याख्या—प्रशाम्यन्ति। कानि?

रोगजलज्वलनविषधरचोरारिमृगेन्द्रगजरणभयानि।
पार्श्वजिननामसङ्कीर्तनेन (प्रशाम्यन्ति) सर्वाणि॥ चेत्यक्षरार्थः॥

यन्त्रमधुना—

हुं ततो देवदत्त हुं कृत्वा ठकारेण वेष्टनीयम्। ततः षोडशस्वरैर्वलयं पूरितव्यम्। बाह्ये ककारादिहपर्यन्तवर्णैरावेष्टय बाह्ये मायाबीजेन वेष्टनीयम्। [अष्टादश यन्त्रम् १८] इदं यन्त्र सुरभिद्रव्यैर्लिखितं मूलमन्त्रेण—

ॐ ह्रीँ श्रीँ नमिऊण पास विसहर वसह जिणफुलिंग ह्रीँ श्रीँ नमः स्वाहा" एतल्लक्षणेन पूजितं सर्वभयरक्षां करोति॥

अधुना उपसंहारमाह—

एवं महाभयहरं पासजिणिंदस्स संथवमुआरं।
भविअजणाणंदयरं कल्लाणपरंपरनिहाणं॥ १९॥

रायभयजक्खरक्खसकुसुमिणदुसउणरिक्खपीडासु।
संझासु दोसु पंथे उवसग्गे तह य रयणीसु॥ २०॥

व्याख्या—

एवं महाभयहरं पार्श्वजिनेन्द्रस्य संस्तवमुदारम्।
भविकजनानन्दकरं कल्याणपरम्परनिधानम्॥
राजभययक्षराक्षसकुस्वप्नदुःस्वप्नऋक्षपीडासु।
सन्ध्ययोर्द्वयोः पथि उपसर्गे वा तथा रजनीषु॥ इत्यक्षरार्थः।

गुरुसम्प्रदायश्चात्र—

प्रथमं क्षकारोदरे देवदत्तनामालिख्य ऐङ्कारेण ॐकारेण स्वाकारेण हाकारेण च वेष्टय उपरि वलयं कृत्वा षोडशस्वरैर्वेष्टनीयम्। बाह्ये ह

समाप्तमिति ।

साह श्री वच्छासुत साह सहस्रकिरणेन पुस्तकमिदं गृहीतं सुत साह वर्द्धमानशान्तिदास पाल(पठ)नार्थम् ।

[ ३ ]

## श्रीमानतुङ्गसूरिशिष्यश्रीधर्मघोषसूरिविरचितः

# श्रीचिन्तामणिकल्पः ।

किञ्चिद् गुरूणां वदनारविन्दान्निशम्य सम्यक् परमार्थमुच्चैः ।
विलिख्यते स्वान्यजनोपकृत्यै श्रीपार्श्वचिन्तामणिमन्त्रकल्पः ॥ १ ॥

नत्वा प्रणतनागेन्द्रं पार्श्वनाथं जिनेश्वरम् ।
चिन्तामणिसुमन्त्रस्य वक्ष्ये कल्पं समासतः ॥ २ ॥

चिन्तामणिर्मूलमन्त्रः कामधुक् कल्पपादपः ।
मन्त्रराजः सर्वकर्मा निधिः कामघटोऽपि च ॥ ३ ॥

**पाठान्तरः—**

कल्पवृक्षो महातेजा महाचिन्तामणिर्नवः ।
कामधुक् कल्पराट् कर्मनिधिः कामघटोऽपि च ॥ ४ ॥

एतानि तस्य नामानि मन्त्रशास्त्रपरायणैः ।
प्रथितानि प्रयत्नेन ज्ञातव्यानि गुरोर्मुखात् ॥ ५ ॥

यस्य तस्य न दातव्यो मन्त्रोऽयं गुरुणापि हि
यतः कुपात्रदानेन दोषाः स्युरुभयोरपि ॥ ६ ॥

कुलीनं धार्मिकं भक्तं पूजाकर्मरतं तथा ।
धनिनं दानशीलं च गुरोर्वचनतत्परम् ॥ ७ ॥

ईदृशं साधकं ज्ञात्वा मूलमन्त्रं प्रकाशयेत् ।
विधाय परमां पूजां दीपोत्सवादिपर्वणि ॥ ८ ॥

लब्धे मन्त्रे ततो धीमान् श्रीमत्पार्श्वजिनप्रभोः ।
विधायाष्टाह्निकापूजां गुरोर्वस्त्रैश्च पूजनम् ॥ ९ ॥

सौवर्णे राजते पात्रे ताम्रपात्रे सिताम्बरे ।
कर्पूररोचनावर्णैर्लिखेद् यन्त्रं प्रयत्नतः ॥१०॥

गुरुः प्रतिष्ठयेद् यन्त्रं पूजां कर्तुं समुद्यते ।
शिष्ये पवित्रगात्रेपु (ऽथ) धौताम्बरावृते मुखे ॥११॥

शुचिस्थाने न्यसेद् यन्त्रं देवालये सुनिश्चितम् ।
पूर्वोत्तरमुखो भूत्वा श्रीपाणिपुटकेऽपि वा ॥१२॥

आत्मरक्षां विधायोच्चैर्भूमिशुद्धिं प्रकल्पयेत् ।
हंसपूजां ततः कृत्वा पुष्पं शिरसि धार्यते ॥१३॥

ईडायां वहमानायां ततः पूजाः समारभेत् ।
दक्षिणा वर्तमाना चेत् कृत्वा स्नात्रविधिं पुरा ॥१४॥

वीरासनोपविष्टेन पूजा कार्या सुधीमता ।
वामेतरकराङ्गुष्ठपवित्राङ्गुलियोजनात् ॥१५॥

शतपत्रैर्जातिपुष्पैर्बकुलैश्चम्पकैस्तथा ।
कर्पूरागुरुसम्मिश्रैः पूजा कार्या विवेकिना ॥१६॥

अथाहं सम्प्रवक्ष्यामि यन्त्रोद्धारं शुशोभनम् ।
येन विज्ञातमात्रेण फलसिद्धिः प्रजायते ॥१७॥

मध्यभागे प्रभोर्बिम्बं फणिमण्डपराजितम् ।
पार्श्वयक्षं यक्षिणीं च दक्षिणोत्तरभागयोः ॥१८॥

प्रणवाद्यं प्रभोर्नाम ॐ नम इतिसंयुतम् ।
फणिचक्रोपरि न्यासे प्रथमं वलयं मतम् ॥ १९ ॥
चतुर्दलं द्वितीयं तु वामादेवीतिनामकम् ।
आह्वाननाख्य(मवाचन्ती) तार्तीयीकं चतुर्दलम् ॥ २० ॥
प्रणवाद्यं चतुर्थं तत् ह्रीँ नम इति संयुतम् ।
ब्रह्म–धरण–नागाश्च पद्मावत्यपि नामतः ॥ २१ ॥
षोडशार्धदलं तुर्यं मूलमन्त्रसमन्वितम् ।
अआ आदौ अंअः अन्ते दले दले स्वरद्वयम ॥ २२ ॥
पञ्चमे वलये पञ्च पदानि परमेष्ठिनाम् ।
ॐ नमो ह्रीँ नम इति पदाद्यन्ते ज्ञानादि च ॥ २३ ॥
षष्ठे षोडश नामानि देवीनां प्रणवैः सह ।
ह्रीँ नमोऽन्तः प्रविष्टानि रोहिण्यादि दले दले ॥ २४ ॥
प्रणवो मरुदेव्यादिः सप्तमे जिनमातरः ।
चतुर्थ्यन्तपदैर्युक्ताः पत्रे पत्रे तु ह्रीँ नमः ॥ २५ ॥
अष्टमे वलये चाष्टौ द्विगुणानि ग्रहैः सह ।
विजयाद्येकान्तरितः प्रणवो ह्रीँ नमस्तथा ॥ २६ ॥
नवमे वलये चाष्टाविन्द्राद्याः प्रणवैः सह ।
ह्रीँ नमश्चात्र सर्वत्र चतुर्थकवचं पुनः ॥ २७ ॥
मायाबीजेन संवेष्ट्य प्रणवेन तथोपरि ।
अङ्कुशं चापि रेखान्ते विद्यामन्त्रेण वेष्टयेत् ॥ २८ ॥
पृथ्वीमण्डलमध्यस्थं लक्षाक्षरत्रिशूलयुक् ।
कल्पद्रुमसमायुक्तः गुरुपादुकयान्वितः ॥ २९ ॥

यन्त्रोद्धारः समासेन विवृतो मन्दमेधसा ।
जापध्यानक्रमं वच्मि विधिवद् गुरुणोदितम् ॥ ३० ॥
अर्वाचीनफलं ज्ञेयं वश्यस्तम्भनमोहने ।
विद्वेषोच्चाटकर्माणि मनसापि न चिन्तयेत् ॥ ३१ ॥
शान्तिकं पौष्टिकं चापि धर्मध्यानविवर्द्धकैः ।
इहलोकार्थकृन्नित्यं सच्चकार्ये विशेषतः ॥ ३२ ॥
करजापो द्विधा ज्ञेयः सृष्टिसंहाररूपतः ।
नन्दावर्तः श्रुते कार्ये शङ्खावर्तस्तु मङ्गले ॥ ३३ ॥
अथालम्बनहेतुत्वात् शुद्धः स्फटिकमालया ।
कुर्याज्जापं प्रयत्नेन कर्मक्षयनिबन्धनम् ॥ ३४ ॥
अक्षतैः कुसुमैश्चापि जापः कार्यो निरन्तरम् ।
मूलमन्त्रस्य यत्नेन परलोकविधित्सया ॥ ३५ ॥
ध्यानकाले प्रथमतश्चन्द्रकान्तसमप्रभम् ।
पार्श्वनाथप्रभोर्बिम्बं संस्थाप्य प्रविचिन्तयेत् ॥ ३६ ॥
आत्मनश्च प्रभोश्चापि नान्तरं चिन्तयेद् बुधः ।
दुग्धधाराप्रवाहश्च विद्यमानं विचिन्तयेत् ॥ ३७ ॥
मूलमन्त्रस्य बीजानि षट्सु स्थानेषु योजयेत् ।
शिरसि चक्षःकरयोः सृष्टिमार्गेण धीधनैः ॥ ३८ ॥
नादबिन्दुकलाभ्यासाज्ज्योतिरुत्पद्यते पुनः ।
तत्प्राप्तौ च मनुष्याणां जायते परमं पदम् ॥ ३९ ॥
परमेष्ठिमुद्रयाथ सौभाग्यमुद्रयाथवा ।
ध्यायेत् परमबीजानि साधकः सुसमाहितः ॥ ४० ॥

विद्या सौभाग्यमारोग्यपुत्रप्राप्तिविभूतयः ।
कल्याणं सफलं विद्धि करुणां च कुटुम्बितः ॥ ४१ ॥
दश त्रिंशद्विंशहितैः सहस्रैर्लक्षयाथवा ।
जपेद् यः परमं मन्त्रं स प्राप्नोति शिवालयम् ॥ ४२ ॥
विधाय सकलां पूजां प्रभोश्चिन्तामणेरपि ।
ढौकयित्वा च नैवेद्यं जलताम्बूलसंयुतम् ॥ ४३ ॥
ततः कर्पूरफालीनि घण्टानादपुरस्सरम् ।
आरात्रिकं विधायोच्चैर्मङ्गलं च प्रभोः पुरः ॥ ४४ ॥
लवणाञ्चलमुत्तार्य स्तूयात् स्तोत्रैः सदण्डकैः ।
पञ्चाङ्गप्रणतिं कृत्वा योजयेत् करसम्पुटम् ॥ ४५ ॥
माता पिता जगत्त्राता भ्राता स्वामी त्वमेव मे ।
त्वमेव जीवितं नाथ ! भूयो जन्मनि जन्मनि ॥ ४६ ॥
श्रीमानतुङ्गशिष्येण धर्मघोषेण सूरिणा ।
रचितोऽनघकल्पोऽयं चिन्तामणिजगत्प्रभोः ॥ ४७ ॥

[ ३ ]

## अधुना चिन्तामणिसम्प्रदायः।

ॐ ह्रीँ श्रीँ अर्हँ नमिऊण पास विसहर वसह जिणफुलिंग ह्रीँ नमः । एष मूलमन्त्रः ।

चिन्तामणिचक्रं वहिकापट्टे कुङ्कुमगोरोचनाकस्तूरिकाकर्पूरा-

दिभिः सुगन्धद्रव्यैः पूर्वलिखितपटसन्दर्शनेन श्रीपार्श्वनाथस्य जन्मकल्याणकदिने जन्मनक्षत्रे च सूरिणा शिष्येण च कृतस्नात्रेण ब्रह्मचर्योल्लासरतेन च सदशवस्त्राभरणेन साधिष्ठायकश्रीपार्श्वनाथप्रतिमाकृतपञ्चामृतस्नात्रपूजोपचारेण तदग्रे बलिधूपनैवेद्यपूजापूर्वं एष मन्त्रः प्रदातव्यः। अस्य करजापो लक्षमेकं कार्यः। पुष्पजापः श्वेतजातिपुष्प २४००० ततः सिद्धिः। सर्वकर्मकरः।

---

[ ४ ]

## श्रीचिन्तामणिकल्पसारः।

अष्टदलपद्मकोशे श्रीमत्पार्श्व जिनेश्वरं न्यस्य।
नागेन्द्रविधृतछत्रं प्रियङ्गुपत्रावदाताङ्गम् ॥ १ ॥
विजयाजयात्तचमरं वैरोट्यावन्दितं विगतमोहम्।
सत्प्रातिहार्यकलितं देवीपद्मावतीपूज्यम् ॥ २ ॥
श्रीपार्श्वयक्षसकलत्रसंस्तुतं चाष्टनागकुलकलितम्।
विद्यादेवीषोडशपरिकरितं ध्यायेद् देवम् ॥ ३ ॥
प्रणवं न्यस्य ललाटे जिनस्य गोक्षीरचन्द्रकरतुल्यम्।
मायाबीजं हृदये ध्येयं तरुणार्कविम्बनिभम् ॥ ४ ॥
हरिकान्ताया बीजं काञ्चनवर्णं निधाय पदकमले।
अर्हमिति देवबीजं ध्येयं शिष्यैर्गुरोर्वचसा ॥ ५ ॥
शान्तिकपौष्टिकहेतोः श्वेतं ध्यायेच्छशाङ्ककरकल्पम्।
पीतं स्तम्भादिविधौ वश्याकृष्टौ तथा रक्तम् ॥ ६ ॥

धूम्राभमथोच्चाटे कृष्णाभं मारणं विनिर्दिष्टम् ।
मोक्षार्थं व्योमाभं ध्येयं श्रीपार्श्वनाथजिनम् ॥ ७ ॥

यो योगी श्रावकः साधुः शुक्लध्यानपरायणः ।
ध्यायति श्रीजिनं देवं वामेयं भुजगावृतम् ॥ ८ ॥

भूतप्रेतपिशाचाद्यो नालम्भूष्णुस्तदग्रतः ।
नित्यावेलाकृतो रात्रिस्तथैकान्तरस्यन्तरः (?) ॥ ९ ॥

त्रि–चतुर्थ–पक्ष–मास- षण्मास–व्यन्तरादिकाः ।
ज्वराः सर्वेऽपि नश्यन्ति वातपित्तकफोद्भवाः ॥ १० ॥

डाकिनी शाकिनी चण्डी याकिनी राकिनी तथा ।
लाकिनी नाकिनी सिद्धा सप्तधा शाकिनी स्मृता ॥ ११ ॥

एतेषां खलु ये दोषास्ते सर्वे यान्ति दूरतः ।
चिन्तामणिसुचक्रस्थपार्श्वनाथप्रसादातः ॥ १२ ॥

विलिख्य काञ्चनस्थाले श्रीखण्डेन घनेन च ।
चिन्तामणिमहच्चक्रं दर्भमूलेन योगिना ॥ १३ ॥

लिखनीयमिदं चक्रं गन्धधूपादिपूजितम् ।
जातिपुष्पसहस्रेण मूलमन्त्रेण पूजितम् ॥ १४ ॥

प्रक्षाल्याथ च दुग्धेन वारिणा वा प्रयत्नतः ।
ज्वरदोषादिभिर्ग्रस्तं पात्रं पातव्यमेव हि ॥ १५ ॥

एवं सप्तदिनान्याशु पुष्पजाप्यपुरस्सरम् ।
पीतं हि रोगदोषादीन् विनाशयति निश्चितम् ॥ १६ ॥

कार्मणं याति दूरेण यन्मध्यात् केनचित् कृतम् ।
यन्त्रपानप्रयोगेण देहिनां नात्र संशयः ॥ १७ ॥

रक्तकणवीरपुष्पैर्द्वादशसहस्रैः सहस्रसञ्जप्तम् ।
वश्याकर्षणकार्यं करोति मन्त्राधिराजोऽयम् ॥ १८ ॥

स्तम्भयति शत्रुवाचं पीतध्यानेन पीतपुष्पौघैः ।
ईतिस्तम्भं करोति विधिना वरवालुकां जप्त्वा ॥ १९ ॥

अनवच्छिन्ना रेखा देया क्षेत्रेषु मूलमन्त्रेण ।
नाशयति शलभवृन्दं गुरूपदेशेन सञ्जप्तम् ॥ २० ॥

श्मशानकर्पटे खलु श्मशानाङ्गारराजिका च विषैः ।
धत्तूरकरसलिखितं परिजप्तं काहलीपुष्पैः ॥ २१ ॥

उच्चाटयति महेश्वरध्वजातिवद्धं समस्तशत्रुगणम् ।
मारयति चिताङ्गारैः परिजप्तं नास्ति सन्देहः ॥ २२ ॥

इति सङ्क्षेपेण मया कथितं चिन्तामणेः फलं सारम् ।
विस्तरतो विज्ञेयं बृहदुद्धारान्महामतिभिः ॥ २३ ॥

इत्येवं तीर्थनाथप्रवरगुणगणं पार्श्वनाथस्य सम्यक्
चक्रं चिन्तामणिर्यः स्मरति विधिपरो भावशुद्धिस्त्रिसन्ध्यम् ।

सम्प्राप्नोत्याशु राज्यं त्रिदशपतिपदं तीर्थपत्वं च सिद्धिं
का वार्ताऽशेषसिद्धिप्रदभुवनपतेः पादपद्मप्रसादात् ॥ २४ ॥

[ ५ ]

## श्रीतरुणप्रभसूरिविरचितं

# श्रीपार्श्वजिनस्तोत्रम् ।

श्रीस्तम्भन ! स्तम्भनपार्श्व ! नेतः ! प्रतिष्ठितारिष्टघटापनेतः ! ।
मृगारिनागारिमहाविनेत !—जय प्रणम्रात्मशिवप्रणेतः ! ॥ १ ॥
वामेतराङ्घ्रौ धरणोरगेण वामे च पद्मासनपद्मया त्वम् ।
निषेव्यमाणोऽष्टदले मदीये हृत्पुण्डरीके निविशस्व पार्श्व ! ॥ २ ॥
पदोस्तले नागकुलानि यस्याधिमस्तकं ब्रह्म परं स नन्द्यात् ।
दुर्वर्ण सू........रत्न....शालश्रीशोभन ! स्तम्भनपार्श्वनाथ ! ॥३॥
अर्हं परब्रह्म रविस्फुलिङ्ग ॐ ह्रीं नमः श्रीं नमदिन्द्रवृन्द ! ।
प्रणम्यसे पार्श्व ! विषं हर त्वं जिनर्षभ ! श्रीं भवते नमो ह्रीं ॥४॥
दले दले मन्त्रपदादधस्ताद् वर्णोऽनुमानां रुचिरस्वराणाम् ।
सयागवाहैर्युगलैः प्रकीर्त्यः श्रीपार्श्वचिन्तामणिमन्त्र एषः ॥ ५ ॥
द्वितीयपङ्क्तौ वलयच्छदेषु तस्यौं पदाद्यं परमेष्ठिनाम ।
रत्नत्रयस्यापि च नाम नित्यं स ह्रीं नमोऽन्तं प्रयतः स्मरामि ॥६॥
दलस्थिताभिर्वलये तृतीये सभाजितः षोडशदेवताभिः ।
तुर्ये चतुर्विंशतिदेवमातृस्वनामभिः पत्रगतैः समर्च्यः ॥ ७ ॥
दिगष्टके दिक्पतयः सखेटा देव्योऽन्तरे श्रीअपराजितान्ताः ।
जयाजिता श्रीविजया च जम्भा मोहा च वीरा र(स)हिता महन्ति॥८॥
अयस्वभावः प्रकटप्रभावो गुरूपदेशेन विना न गम्यः ।
ध्यानं च कर्मक्षयहेतुरस्याभीष्टप्रदं निर्विषये विधेयम् ॥ ९ ॥

कृत्वा चेतः स्वतन्त्रं त्रिदिवशिववशीकारसंस्कारतन्त्रं
सम्मोहापोहमन्त्रं त्रिभुवनजनताभाग्यसौभाग्यतन्त्रम् ।
दुर्गालीभङ्गयन्त्रं मदमदनरिपुध्वंसतन्त्रं सुयन्त्रं
ये ध्यायन्ति मिमेसां(?) मुदितहृदि सदाध्यक्षलक्ष्योऽस्ति पार्श्वः ॥ १० ॥

इति मया तरुणप्रभया चितं
परिणुतः प्रभुपार्श्वजिनेश्वरः ।
त्रिजगतीवलिराजसभाजितः
स्वचरणं....मम यच्छतु ॥ ११ ॥

---

[ ६ ]

## श्रीकमलप्रभाचार्यप्रणीतं

# श्रीपार्श्वप्रभुस्तवनम् ।

---

जस्स फणिंदफणोहो सोहइ सीसम्मि पणयमणुयाणं ।
मणिदित्तिहिँ दलणो दुरियतमं जगपईवु व्व ॥ १ ॥
वज्जसारिक्खनहे सरणागयवज्जपंजरब्भहियं ।
तं झाएमि तिसंझं पासजिणं परमभत्तीए ॥ २ ॥
क्षिप ॐ स्वाहा अक्खरपंचयरक्खाइ रक्खिओ संतो ।
पासपसायाइ जणो भमेउ भुवणम्मि निव्विग्घं ॥ ३ ॥
नमिऊण पास विसहर वसह जिणफुलिंगह्रीय(मं)ते ।
ॐ ह्रीँ श्रीँ नमक्खरेहि मह वंछियं दिसउ ॥ ४ ॥

न दरिद्दय तसु दीणय भिच्चंति सुरासुराइ दासंति ।
जो समरइ पासपहुं फुलिंगवरमंतमज्झत्थं ॥ ५ ॥
रक्खस पिसाय साइणि गहा वि गच्छंति दूरदेसम्मि ।
पासस्स नामवरसिद्धमंतजावेण किं बहुणा ॥६॥
इय हणिऊण तमोहं फुल्लिंगमंतक्खरप्पहापसरो ।
हवउ जणे सुहहेऊ कमलप्पहगुरुप्पसायाओ ॥ ७ ॥

---

[ ७ ]

श्रीरत्नकीर्तिसूरिप्रणीतं

## श्रीपार्श्वजिनस्तवनम् ।

---

नमिऊण पासनाहं विसहरविसनासिणं तमेव थुणे ।
वसहजिणफुलिंगजयं फुलिंगवरमंतमज्झत्थं ॥ १ ॥
पणवो मायाबीयं नमो जयं सयललच्छिवुड्ढिकरं ।
जो झाएइ तिकालं सो कल्लाणं लहइ विउलं ॥ २ ॥
जलजलणवाहिविसहररायभयजक्खरक्खसग्गहणं ।
चोरा य भूयसावयजरडाइणिसाइणीण भयं ॥ ३ ॥
रक्खइ सिरिपासजिणो अडदलकमलम्मि संठिओ संतो ।
धरणिंदवंदियकमो पउमावइसेविओ निच्चं ॥ ४ ॥
किं देवयदेवीहिं किं वा अण्णेहिं मंतजंतेहिं ।
किं पढियबहुयसत्थेहिं झाइज्जइ पासजिणनाहो ॥ ५ ॥

जा हवइ पढमगाहा सा गाहा होइ विइयठाणम्मि
जा पढमा सा बीया एयं पत्तेयसारं च ॥ ६ ॥

सिरिमुणिसमुद्दसुहगुरु–
सीसेणं रयणकित्तिणा रइयं।
भवियाण मंगलकरं
संथवणं पासनाहस्स ॥ ७ ॥

[८]

## मन्त्राधिराजस्तोत्रम्।

श्रीपार्श्वः पातु वो नित्यं जिनः परमशङ्करः।
नाथः परमशक्तिश्च शरण्यः सर्वकामदः ॥ १ ॥
सर्वविघ्नहरः स्वामी सर्वसिद्धिप्रदायकः।
सर्वसत्वहितो योगी श्रीकरः परमार्थदः ॥ २ ॥
देवदेवः स्वयं सिद्धश्चिदानन्दमयः शिवः।
परमात्मा परब्रह्म परमः परमेश्वरः ॥ ३ ॥
जगन्नाथः सुरज्येष्ठो भूतेशः पुरुषोत्तमः।
सुरेन्द्रो नित्यधर्मश्च श्रीनिवासः शुभार्णवः ॥ ४ ॥
सर्वज्ञः सर्वदेवेशः सर्वदः सर्वगोत्तमः।
सर्वात्मा सर्वदर्शी च सर्वव्यापी जगद्गुरुः ॥ ५ ॥
तत्त्वमूर्तिः परादित्यः परब्रह्मप्रकाशकः।
परमेन्दुः परप्राणः परमामृतसिद्धिदः ॥ ६ ॥

अजः सनातनः शम्भुरीश्वरश्च सदाशिवः ।
विश्वेश्वरः प्रमोदात्मा क्षेत्राधीशः शुभप्रदः ॥ ७ ॥
साकारश्च निराकारः सकलो निष्कलोऽव्ययः ।
निर्ममो निर्विकारश्च निर्विकल्पो निरामयः ॥ ८ ॥
अमरश्चाजरोऽनन्त एकोऽनङ्गः शिवात्मकः ।
अलक्ष्यश्चाप्रमेयश्च ध्यानलक्ष्यो निरञ्जनः ॥ ९ ॥
ॐकाराकृतिरव्यक्तो व्यक्तरूपस्त्रयीमयः ।
ब्रह्मद्वयप्रकाशात्मा निर्भयः परमाक्षरः ॥ १० ॥
दिव्यतेजोमयः शान्तः परामृतमयोऽच्युतः ।
आद्योऽनाद्यः परेशानः परमेष्ठी परः पुमान् ॥ ११ ॥
शुद्धस्फटिकसङ्काशः स्वयम्भूः परमाच्युतः ।
व्योमाकारस्वरूपश्च लोकालोकावभासकः ॥ १२ ॥
ज्ञानात्मा परमानन्दः प्राणारूढो मनःस्थितिः ।
मनःसाध्यो मनोध्येयो मनोदृश्यः परापरः ॥ १३ ॥
सर्वतीर्थमयो नित्यः सर्वदेवमयः प्रभुः ।
भगवान् सर्वतत्त्वेशः शिवश्रीसौख्यदायकः ॥ १४ ॥
इतिश्री पार्श्वनाथस्य सर्वज्ञस्य जगद्गुरोः ।
दिव्यमष्टोत्तरं नामशतमत्र प्रकीर्तितम् ॥ १५ ॥
पवित्रं परमध्येयं परमानन्ददायकम्
भुक्तिमुक्तिप्रदं नित्यं पठतो मङ्गलप्रदम् ॥ १६ ॥
श्रीमत्परमकल्याणसिद्धिदः श्रेयसेऽस्तु वः ।
पार्श्वनाथजिनः श्रीमान् भगवान् परमः शिवः ॥ १७ ॥

धरणेन्द्रफणच्छत्रालङ्कृतो वः श्रियं प्रभुः ।
दद्यात् पद्मावतीदेव्या समधिष्ठितशासनः ॥ १८ ॥
ध्यायेत् कमलमध्यस्थं श्रीपार्श्वं जगदीश्वरम् ।
ॐ ह्रीँ श्रीँ र्हः समायुक्तं केवलज्ञानभास्करम् ॥ १९ ॥
पद्मावत्यान्वितं वामे धरणेन्द्रेण दक्षिणे ।
परितोऽष्टदलस्थेन मन्त्रराजेन संयुतम् ॥ २० ॥
अष्टपत्रस्थितैः पञ्चनमस्कारैस्तथा त्रिभिः ।
ज्ञानाद्यैर्वेष्टितं नाथं धर्मार्थकाममोक्षदम् ॥ २१ ॥
सत्षोडशदलारूढं विद्यादेवीभिरन्वितम् ।
चतुर्विंशतिपत्रस्थं जिनमातृसमावृतम् ॥ २२ ॥
मायावेष्टत्रयाग्रस्थं क्रौँकारसहितं प्रभुम् ।
नवग्रहावृतं देवं दिक्पालैर्दशभिर्वृतम् ॥ २३ ॥
चतुष्कोणेषु मन्त्राद्य-चतुर्बीजान्वितैर्जिनैः ।
चतुरष्टदशद्वित्रिद्विधाङ्कसंज्ञकैर्युतम् ॥ २४ ॥
दिक्षु क्षकारयुक्तेन विदिक्षु लाञ्छितेन च ।
चतुरस्रेण वज्राङ्कक्षितितत्त्वे प्रतिष्ठितम् ॥ २५ ॥
श्रीपार्श्वनाथमित्येवं यः समाराधयेज्जिनम् ।
तं सर्वपापनिर्मुक्तं भजते श्रीः शुभप्रदा ॥ २६ ॥
जिनेश ! पूजितो भक्त्या संस्तुतः प्रस्तुतोऽथवा ।
ध्यातस्त्वं यैः क्षणं वापि सिद्धिस्तेषां महोदया ॥ २७ ॥
श्रीपार्श्वमन्त्रराजान्ते चिन्तामणिगुणास्पदम् ।
शान्तिपुष्टिकरं नित्यं क्षुद्रोपद्रवनाशनम् ॥ २८ ॥

एवं भूमण्डले ध्यायेत् सवज्रचतुरस्रकैः ।
धरावर्णाङ्कितैर्दिक्षु विदिग्भागेषु लाञ्छितम् ॥ १४ ॥
इति चिन्तामणिर्नाम चक्रं त्रैलोक्यपूजितम् ।
ज्ञानबीजं जगद्वन्द्यं सर्वतत्त्वैकनायकम् ॥ १५ ॥
मालतीनां सहस्रैस्तु पुष्पैर्द्वादशभिर्वरैः ।
विधिनाचाम्लभक्तस्थो मन्त्रराजेन योऽर्चयेत् ॥ १६ ॥
लेखिन्या हेमजात्या वा लिखित्वेदं सुगन्धिकैः ।
ताम्रेऽथ वहिकापट्टे भूर्जे गोरोचनादिकैः ॥ १७ ॥
तस्य सन्तुष्य प्रत्यक्षं पार्श्वनाथो जिनेश्वरः ।
दर्शयत्यात्मकं रूपं कामं दद्यात् समीहितम् ॥ १८ ॥
अथान्तरात्मशुद्ध्यर्थं प्रभुं ध्यायेच्चतुर्विधम् ।
पिण्डस्थं च पदस्थं च रूपस्थं रूपवर्जितम् ॥ १९ ॥
आदौ पवित्रमात्मानं शुद्धमत्यन्तनिर्मलम् ।
प्रोक्ताभिर्धारणाभिश्च पञ्चभिः पार्थिवादिभिः ॥ २० ॥
क्षिपॐस्वाहेति पञ्चमहद्भूतैश्च तैरपि ।
साक्षाद्दिव्यमयं कृत्वा चतुर्धा ध्यानमभ्यसेत् ॥ २१ ॥
अब्जगर्भसमासीनमात्मानं तद्विभोरिव ।
तत्त्वोपलक्षितं ध्यायेत् तत् पिण्डस्थं प्रकीर्त्तितम् ॥ २२ ॥
ततोऽस्मिन्निश्चलाभ्यासाद् योगस्तन्मयतां गतः ।
मन्त्रराजं स्मरेद् वीरस्तत् पदस्थं च संस्मृतम् ॥ २३ ॥
संस्मरेन् मन्त्रराजस्य त्रिशुद्ध्याऽष्टोत्तरं शतम् ।
भुञ्जानोऽप्युपवासस्य प्राप्नोति तपसः फलम् ॥ २४ ॥

अमुमेव महामन्त्रं लक्षसङ्ख्यमिति स्मरन् ।
ध्यात्वा ज्ञानमवाप्नोति छित्वा कर्माष्टकल्मषम् ॥ २५ ॥

शनैर्मन्त्रगुणोद्भूतमात्मानं सिद्धरूपकम् ।
चिन्तयन् सर्वगं शान्तं सर्वज्योतिर्मयं शिवम् ॥ २६ ॥

सर्वावयवसम्पूर्णं सर्वलक्षणलक्षितम् ।
निष्पन्नं पुरुषाकारं रूपस्थं तद्बुधैर्मतम् ॥ २७ ॥

सर्वं विहाय सालम्बं ध्यानं ध्यायेच्च केवलम् ।
आत्मन्येव यदात्मानं तदा मुक्तिर्न चाऽन्यथा ॥ २८ ॥

ज्योतिर्मयं महाबीजममूर्तं परमेश्वरम् ।
सर्वात्मगं तमीशानमनन्तं विश्वव्यापिनम् ॥ २९ ॥

पश्यन्निति निरालम्बं परमात्मानमव्ययम ।
शिवसौख्यागतश्चासौ रूपातीतं हि मन्यते ॥ ३० ॥

इत्येवं मोक्षफलेन पार्श्वनाथः स्तुतो मया ।
स जिनः पातु मां देवः पतन्तं भवसागरे ॥ ३१ ॥

इति जिनपतिदिव्यस्तोत्रलक्षान्तरेण
परमपदनिमित्तं ज्ञानयोगस्वरूपम् ।
प्रकथितमिह नूनं पार्श्वनाथप्रसादात्
तदखिलमपि धीरैः सर्वदान्वेषणीयम् ॥ ३२ ॥

[ १० ]

श्रीमेरुतुङ्गसूरिविरचितं

# श्रीपार्श्वनाथस्तोत्रम् ।

ॐ नमो देवदेवाय नित्यं भगवतेऽर्हते ।
श्रीमते पार्श्वनाथाय सर्वकल्याणकारिणे ॥ १ ॥

ह्रीँ रूपाय धरणेन्द्रपद्मावत्यर्चिताङ्घ्रये ।
सिद्धातिशयकोटीभिः सहिताय महात्मने ॥ २ ॥

अट्टे मट्टे पुरो दुष्टविघट्टे वर्णपङ्क्तिवत् ।
दुष्टान् प्रेतपिशाचादीन् प्रणाशयति तेऽभिधा ॥ ३ ॥

स्तम्भय स्तम्भय स्वाहा शतकोटिनमस्कृतः
अधमत् कर्मणां दूरादापतन्तीर्विडम्बनाः ॥ ४ ॥

नाभिदेशोद्भवन्नाले ब्रह्मरन्ध्रप्रतिष्ठिते ।
ध्यातमष्टदले पद्मे तत्त्वमेतत् फलप्रदम् ॥ ५ ॥

तत्त्वमत्र चतुर्वर्णी चतुर्वर्णविमिश्रिता ।
पञ्चवर्णक्रमध्याता सर्वकार्यकरी भवेत् ॥ ६ ॥

क्षिप ॐ स्वाहेति वर्णैः कृतपञ्चाङ्गरक्षणः ।
योऽभिध्यायेदिदं तत्त्वं वश्यास्तस्याऽखिलाः श्रियः ॥७॥

पुरुषं बाधते बाढं तावत् क्लेशपरम्परा ।
यावन्न मन्त्रराजोऽयं हृदि जागर्त्ति मूर्त्तिमान् ॥ ८ ॥

व्याधिबन्धवधव्यालानलाम्भःसम्भवं भयम् ।
क्षयं प्रयाति पार्श्वेशनामस्मरणमात्रतः ॥ ९ ॥

यथा नादमयो योगी तथा चेत् तन्मयो भवेत् ।
तदा न दुःकरं किञ्चित् कथ्यतेऽनुभवादिदम् ॥ १० ॥

इति श्रीजीरिकापल्लीस्वामी पार्श्वजिनः स्तुतः ।
श्रीमेरुतुङ्गसूरेः स्तात् सर्वसिद्धिप्रदायकः ॥ ११ ॥

जीरापल्लीप्रभुं पार्श्वं पार्श्वयक्षेण सेवितम् ।
अर्चितं धरणेन्द्रेण पद्मावत्या प्रपूजितम् ॥ १२ ॥

सर्वमन्त्रमयं सर्वकार्यसिद्धिकरं परम् ।
ध्यायामि हृदयाम्भोजे भूतप्रेतप्रणाशकम् ॥ १३ ॥

श्रीमेरुतुङ्गसूरीन्द्रः श्रीमत्पार्श्वप्रभोः पुरः ।
ध्यानस्थितिं हृदि ध्यायन् सर्वसिद्धिं लभेद् ध्रुवम् ॥१४ ॥

---

[ ११ ]

श्रीपूर्णकलशगणिप्रणीतं

मन्त्रयन्त्रादिगर्भितं

# श्रीस्तम्भनपार्श्वजिनस्तवनम् ।

जसु सासणदेविवएसि कयाभयदेवगुरूहि पइट्ठतया ।
अरिथंभणए अरिथंभणए पुरि पासमिमं थुणि पुण्णकए ॥१॥

स्वोपज्ञा वृत्तिः ।

जं संथवणं विहियं तस्स य टिप्पेमि किंचि मंताई ।
उवयारत्थं संघे संभरणत्थं च अप्पस्स ॥ १ ॥

**जुमोणेण०२** इत्यादिद्वितीये वृत्ते–'ॐ ह्रीँ नमः' इति **श्रीजिनदत्तसूरीणां** मूलविद्या । तथा च [1]**श्रीजिनदत्तसूरिपादैरेवोक्तम्**–

" वर्णान्तः पार्श्वजिनो रेफस्तदधः स [2]धरणेन्द्रः ।
तुर्यस्वरः सविन्दुः स भवेत् [3]पद्मावतीसंज्ञा ॥
त्रिभुवनजनमोहकरी विद्येयं प्रणवपूर्वनमनान्ता ।
एकाक्षरेति सञ्ज्ञा जपतः फलदायिनी नित्यम् ॥ "

( श्रीमल्लिषेणसूरिविरचिते श्रीभैरव पद्मावतीकल्पे ३देव्याराधनक्रमे गा. ३३।३४ )

वार्तिकोऽर्थो लिख्यते—

**जुमोणेण** ઇત્યાદિ દ્વિતીય વૃત્તનઈ વિષઇ ॐ ह्रीँ नमः ઇતિ **श्रीজিনदत्तसूरि** મૂળ વિદ્યા મંત્ર. કાર્યસિદ્ધિદાયક શ્રીપાર્શ્વનાથ ધરણેંદ્ર પદ્માવતી સાધન ॥२॥

१ °तैरवोक्तम्° क–ख–ग । २ °गणधरेन्द्रः । °ग । ३ °देवी ॥°ग ।

जुमोणेण ॐ ह्रीँ नमोऽणेण मंते मणोवंछियं झत्ति देई सरंते ।
स ते मे जिणो पासु इट्ठं करिज्जा मणोवंछिआ लच्छि सिद्धी उ 'दिज्जा ॥ २ ॥
जु कोपं धुरे हंस हंसेण मंते विसं नासए थावरं भत्तिमंते ।
अयावारि–हिंगू–वजाजोगि जेवं भुअंगस्स झायामि तं पासदेवं॥३॥

वृत्तिः ।

जु कोपं धुरे ३ इत्यादि–' कोपं हंसः हंसः ' वार १०८ अनेन मन्त्रेण [2]पानीयमभिमन्त्र्य पाय्यते हस्ताघातं च क्रियते [3]स्थावरविषनाशः ।
तथा–हिंगु वचा सममात्रा एकीकृत्य अजामूत्रेण सह पातव्यं [4]सर्वविषनाशः । स्थावरविषये [5]किंचिदनुभूतमपि दृष्टप्रत्ययत्वाद् लिख्यते–'हुंउ शिव हउं शंकर हउं ब्रुपरम तात [6]विषहउं विष खाउं विस अवलेपणि करउं जादिसि चाहउं सा दिसि निर्विस करउं हरो हरः शिव नास्ति विषु ।' स्थावरविषभक्षणमन्त्रः । भक्षिते वा कालापानीयं पातव्यं वार २७ अभिमन्त्र्य पाय्यते [7]विषनाशः । नीलकंठमहि रावण कंठह विस हरइ जाहि विसहउरतेउ तं संवरइ मगइ हरो हरः शयः नास्ति विषं । भक्षिते विषे मुखे घरघराटो भवति । अनेन वार ७ अभिमन्त्र्य कण्ठे बध्यते सुखी भवति ॥३॥ '

बार्तिकोऽर्थः ।

जु कोपं धुरे इत्यादि ३ वृत्तनथ विरुद्ध कोपं हंस हंस वार १०८ पाणि मंत्रि हरो जेम अभिमंत्री करी पाइयइ, हाथ [8]वाहियइ–आडियइ स्थावर विष ऊतरइ. ॥३॥

१ °गुहविर्विषिज्जा° ग । २ °जल° क–ख । ३ °स्थावरविरोधस्यो भवति° । क–ख । ४ °सर्वदर्पविषोपशमो भवति° । क–ख । ५ °देनुभूतमपि दृष्टप्रत्ययत्वाद्° क–ख । ६ °विष रंजउं ° क । विसहह चंखउं ग । ७ ° निर्विषः स्यात् °क–ख । ८ °हाथरूं आडीजइ. सापविष ऊतरइ.° ग ।

समा पिप्पिली सिंधवं तह मिरीया तहिं तुलमेलेवि निम्बस्स बीया ।
विसं नासिआ सप्पकेरं हरंती तहा नाम ते पास ! सिद्धा मुणंति॥४॥

वृत्तिः ।

वृत्ते सर्पविषस्य औषधं प्रोक्तम् । पुनराह—

**समा पिप्पली४** इत्यादि । पिप्पली–सैन्धव–मरीचि–निम्बबीजानि सममात्रया मेलयित्वा पानीयेन सह घृष्ट्वा नाशो दियते सर्पविषं नाशयति ॥ ४ ॥

वार्तिकोऽर्थः ।

तथा पीपेर. सैंधव अथवा हींगु, वचा सममात्रा करी सूक्ष्म कीजइ, छाली मूत्र सेती पाइयइ सर्प विष उतरइ. स्थावर विषनो उपचार अत्र अण कह्यो पिण लिखिये छे, दृष्ट प्रत्ययथी "सिव" ए स्थावरविषभक्षण मंत्र. किणही वछनाग प्रमुख विष खाधु हुइ तेहनइ इणेइ मंत्रि करी कलवाणी वार २७ अभिमंत्री पाइयइ, विष उपशमइ.

नीलकंठ महिरावण कंटइ विसु हरइ जाहि विस ।

सयखंड तसं करिशइ भणइ हरो हरः शिव नास्ति विषम् ॥ ३ ॥

विषा विषं खाधई गळउ धुंटीजइ तिवारई ए मंत्र भणी भणी गळई हाथि फेरीजई. वार ७ गळउ साजउ थाइ. विष उतरइ ॥ ३ ॥

समा पिप्पिली ४ वृत्तनइ विषइ पींपली, सींधव, मिरच, नींब बीज सममात्रा मेल करी पाणी सेती घसी नास दीजइ सर्प विष नाशइ. ॥४॥

जहा ॐनमोऽतोऽपि रत्नत्रयाय ततश्चामले । विमले । स्वायहाय ।
विसं उंजिअं सप्पकेरं हरेई तहा नामु ते पास ! सिद्धि समेई ॥५॥
जहा ॐ तु कं खं फटो वांत साहा विसं लंगेली मूल जे आलिहाहा ।
करंताण नासेइ नामरस आवो तुहं पास ! तेणं अचिंतप्पमावो ॥६॥

वृत्तिः ।

जहा ॐ **नमो** ५ इत्यादि । ॐ नमो रत्नत्रयाय अमले । विमले । स्वाहा । १०८ हस्तवाहनं क्रियते [३]अभिमन्त्रितवारिपानं च सर्पविपनाशः। कदाचित् कोऽपि विपं चटापयति तदा तस्य विपमन्त्रोऽयम्[४] 'ह्रीँ हूँ हः' अनेन वार ७।२१ तथा १०८ हस्तवाहने विषबन्धः। तथा 'क्षः' इति स्मर्यते सर्पो न लगति । तथा ॐ कुरुकुल्ले । मातङ्गशबराय शङ्खं वादय वादय ह्री फट् स्वाहा । [५]मान्त्रितवालुकाक्षेपे गृहात् सर्पो नश्यति। इति [६]मन्त्रत्रयं वृत्तेऽनुक्तमपि सोपयोगित्वाल्लिखितम् ॥ ५ ॥

जहा ॐ तु कं ६ इत्यादि । 'ॐ कं खं फट् स्वाहा' [७]वृश्चिकविपं नश्यति । तथा लाङ्गलीमूलं पानीयेन संघृष्य डंके देयं वृश्चिकविपं-

वार्तिकोऽर्थः ।

जहा० ५ वृत्तनई विपई ॐ नमो रत्नत्रयाय अमले विमले स्वाहा એણુઈ મંત્રઈ વાર ૧૦૮ કલવાણી [૯]કરી પાવિયઈ સર્પવિષ નાશઈ, પિઆરઈ કોઈ તેહનઈ વિષ ચડાવઈ તઉ તેહનઈ ह्रीँ हूं हः ઇણિ મંત્રિ કરી વાર ૭।૨૧।૧૦૮ હાથ ઝાટીયઈ વિષ ઉતરઈ. તથા क्षः ઇતિ મંત્ર સમરિજઈ સર્પ ન લાગઈ. તથા ॐ कुरुकुल्ले ! मातङ्ग-

---

१ °नंगली° क–ग । २ °यालिहाहा° क–ग । ३ °पानीयमभिमन्त्र्य पाय्यते° क–ख । ४ °यथा° ख । ५ °वालुकाऽभिमन्त्र्य वार २१ गृहे क्षिप्यते° क–ख । ६ °त्रयमप्येतदनुक्तं° क–ख । ७ °वृश्चिकविपमन्त्रः° क–ख । ८ °उत्तरति° क–ख । ९ હાથરયું કાર દીજઈ, અથવા ઝાડઉ દીજઈ.

जु ॐ भूरु भूरेत्यतो वांत साहा वडीनं कवित्थस्स खज्जूर वाहा।
जिवं साणजो वाहा ठठो वांतसाहा हरेई स पासो हविज्जह्म नाहा ॥७॥

वृत्तिः ।

याति। यदुक्तं **विजयप्रकरणे**—'अह [1]लंगलीअ मूलं आलेवे हणइ विच्छिआण विसं।'

तथा ॐ हृदये ठः ठः, ललाटध्याने डङ्कादपि वृश्चिक उत्तरति। इति। तथा कासपमर्दिकामूलं उर्ध्वं स्पृश्यते तदा चटति, अधो वा नीयते तदा उत्तरति। सुमुहूर्ते ग्राह्यम्। इदमप्यनुक्तम् ॥ ६ ॥

जु ॐ भूरु ७ इत्यादि। ॐ भूरु भूरु स्वाहा। वार २१ हस्त-वाहनं क्रियते [2]खर्जूरकविषनाशः। तथा कपिकच्छूवटिका पानीयेन सह

वार्त्तिकोऽर्थः ।

शबराय शङ्खं वादय वादय ह्रीं फट् स्वाहा વાર २१ ઇણિ મંત્રિ કરી વાલૂકા મંત્રી ઘર મધ્યે નાંખીયઇ ગૃહથકી સર્પ નીકળી જાઈ.

ઇતિ મંત્ર ૩ અનુક્તં સોપયોગં લિખિતં ॥ ५ ॥

जहा ॐ तु ६ વૃત્તનઇ વિષઇ ॐ कं खं फट् स्वाहा ઇણઇ મંત્રિ કરી [3]વીંછૂ વિષ ઉતરઈ. નંગલી (ઉત્તર વારૂણી, બીજઉ નામ દૂધેલી) મૂલ પાણી સંઘાતિ ઘસી કરી ડંકિ લગાડીજઇ વીછૂ વિસ ઉતરઇ. ॐ हृदये ठः ठः એ મંત્ર ગુણીજે, તિવારે લલાટનો ધ્યાન કીજે. વીછીનો વિષ ડંક સુધી ઉતરે. તથા કાસપમર્દિકાની જડ ઉંચી ઉંચી ફરસીજઈ તઉ વિષ ઉંચઇ ઉંચઉ ચડઇ. નીચી નીચી ફરસી જઇ તઉ વિષ ઉતરઇ, પરં રૂડઇ દિહાડઇ, રૂડઇ મુહૂર્તઇ લીજઇ એમ આમ્નાય અત્ર અણકહ્યા લિખ્યા છઇ ॥ ६ ॥

ॐ भूरु॰ ઇતિ ७ વૃત્તનઈ વિષઈ ॐ भूरु भूरु स्वाहा વાર २१

१ °नंगलीअ° ख। २ °खर्जुरकविषोपशमो भवति° क-ख। ३ °એ વીંછી મંત્ર° ग।

जु ॐ रांतरां रूंतरौं रः सुवाहा हरे कामलं उंजियंणेण वाहा ।
सहों क्षींति होंतं सिरस्साचि पासो हरिज्जा दुहं पत्तनिव्वाणवासो ॥८॥
मिरीया वया कुट्ठ पत्था विभीया तमिज्जाण सखाण नाही अकीया ।
अयाजोइ पीसेवि गोली अ छाए हरंतं जणे अक्खिरोगे[1] जियाए ॥९॥

वृत्तिः

सहृष्य दष्टे दीयते खर्जूरकविषं तत्क्षणादेव नजति । ॐ ठः ठः स्वाहा । वार २१ हस्तवाहने श्वानविषोपशमः ॥ ७ ॥

जु ॐ रांत ८ इत्यादि । ॐ रां रीं रुं रौं रः स्वाहा । वार २१ अंजने कामलरोगोपशमः । तथा ॐ क्षां क्षीं क्षः हः [2]शिरोऽर्तेरुपशमः ॥८॥

मिरीया वया ९ इत्यादि०, मरीच-वचा-कुष्ठ-पथ्या-बिभीतकमिश्रा-शङ्खनाभिसममात्रया मेलयित्वाऽजामूत्रेण पेषयित्वा शतभिषक्नक्षत्रे गुटिकाः कृत्वा छायायां शोष्यन्ते, ताभिश्चक्षुरञ्जने नेत्ररोगोपशमः । मरीच-मणसील-सममात्रयाऽजामूत्रेण सह पेषयित्वा गुटिकाः कारयेत्, पानीयेन सह चक्षुरञ्जने चक्षूरोगोपशमः ॥ ९ ॥

वार्त्तिकोऽर्थः ।

એણુઈ મંત્રિ કરી [3]ઝાડિયઇ કાનખજૂરાનઉ વિસ ઉતરઇ. તથા કઈય વડી (કુઉંચીની જડ) પાણી સંઘાતિ ઘસી ડંકિ દીજઇ કાનખજૂરાનઉ વિસ ઉતરઇ.

ॐ ઠઃ ઠઃ સ્વાહા વાર ૨૧ હાથ વાહિયઈ શ્વાન વિસ ઉતરઇ.૭

જુ ॐ ઇતિ ૮ વૃત્તનઇ વિષઈ ॐ રાં રીં રું રૌં રઃ સ્વાહા વાર ૨૧ ઝાડો દીજઇ કમળો જાયઇ. ॐ ક્ષાં ક્ષીં ક્ષઃ હઃ સ્વાહા હાથસ્યું ભેંત્રીજઇ મથવાય જાયઇ. માથઉ દૂખતઉ રહઇ ॥ ૮ ॥

મિરી०૯ મિરી, વજ, કૂઠ, હરડઇ, બેહડાબીજ, શંખનાભિ એતલા ઔષધ સમમાત્રા મેલી છાલીમૂત્રસ્યું ગોળી કીજઇ, છાંહડી સુકાવીજઇ દેખતે નક્ષત્રે (સતભીખા) પાણી સંઘાતિ ઘસીને નેત્રાંજન કીજઇ નીલિનામ નેત્રરોગ જાઈ. ૯

1 °रोगे जियाए° फ। 2 °अर्द्धशिरोऽर्त्तिनाशः° फ। 3 °ઝાડો દીજઇ° ग।

मिरिया मणाईसिला जाइमुत्ते
जिवं पीसि चक्खू अ अंजीय सुत्ते ।
भरी अंखि पुल्लं वहेडाण वीअं हरे सिंघवं संखनाही जितेअं ॥ १०
तहा तुह्म नामस्स भेसज्जजोगे हरेई अ अन्नेवि अक्खीण रोगे ।
अओ अग्गए पासधन्नंतरीसो महं फोरिअं होइ लोए विमीसो ॥ ११ ॥

वृत्तिः ।

तथा–बिभीतकबीजानि सैन्धवं शङ्खनाभिश्च सममात्रा सूक्ष्मं चूर्णं कृत्वा नेत्राञ्जने पुष्पकं याति । तथा शर्करासमुद्रफेनयुता सममात्रचूर्णं कृत्वा नेत्राञ्जने पुष्पकं याति । तथा कदलीमूलं अश्वमूत्रेण घृष्ट्वा नेत्राञ्जनेऽञ्जनमात्रेण नीलीनाम रोगो याति । एतदौषधद्वयं सोपयोगित्वादनुक्तमप्युक्तम् ॥ १० ॥

**डुंगर ११** इत्यादि. यथेयं गाथा सूर्यवायुहर्त्री, तथैष, मन्त्रः–जिवं सुज्झवायं ( गा° १२ ) इत्यादि ।

वार्तिकोऽर्थः ।

मिरीया मणासीलजाई० १० મિરી, મણસિલ, બહેડા, सैंधव, શંખનાભિ, અજામૂત્ર ગોલી ૧૪ દિન અંજનં સર્વ નેત્રરોગ જાઈ સત્યં ॥

મિરચ ૧ મણસિલ ૨ જાઇરા ફૂલુ ગોળી ફૂલઉ જાઈ, સિંધવ, બહેડામીંજ, શંખનાભિ એ ૪ બરાબર મેલી છાલીમૂત્રસ્યું ગોળી કરી. છાંહ સુકવીયઇ, અંજન કીજઇ; ફૂલઉ જાઇ, શાકર, સમુદ્રફેણું સમમાત્રા ચૂર્ણ કીજઇ આંખિ આંજીયઈ ફૂલઉ જાઇ. કણયરમૂળ ઘોડાના મૂત્રસ્યું ઘસી આંખિ આંજીયઇ નીલબિંદ જાયઈ. એ ઔષધ બે અણકહ્યાં લિખ્યાં છઈ. ॥ १० ॥

तहा तुम्ह नामस्स भेसज्ज० એ બે વૃત્ત પ્રગટાર્થ જાણિવા. ૧૧

ॐ डुंगर उप्परि रिसि मुअउ सोअ अप्पुत्तु वराउ ।
सम्मु कारणि मई पाणिउ दिन्नउ फिट्टउ सुरिजवाउ ॥ १२ ॥
जिवं मुज्जवायं इमं उज्जणेणं तहीं श्री ह्रि ठः स्वादिहाणं खणेणं ।
हुट्टकीअ नासेइ नामं तुम्हाणं तहा पास ! चित्तं अओ पंडियाणं॥१३॥
जहा ॐ इटीतो मिटीतोऽपि भस्सं करि स्वायेति प्रजप्तं जलं स्वम् ।
करे पिट्टपीडापहारेण मुत्थं पवीअं तहा पास ! नामं तवित्थं ॥१४॥

वृत्तिः ।

ॐ ह्रीँ ठः ठः स्वाहा हस्तताडनात् हुड्की [1]याति ॥१२॥

ॐ उदितो भगवान् सूर्यः पद्महस्तः केतने ।

आदित्यस्य प्रसादेन अनुदस्यार्धभेटकं नाशय नाशय स्वाहा ॥ अनेन १०८ धारणा क्रियते । अथवा कुङ्कुमेन भूर्जे लिखितं कर्णे बद्धं अर्द्धभेटकं नाशयति ॥ १३ ॥

जहा ॐ इटि १४ इत्यादि०, ॐ इरिमिटि भस्मंकरि स्वाहा ॥ वार ७ तथा २१, १०८ पानीयमभिमन्त्र्य पाय्यते उदरपीडा याति ॥१४॥

वार्तिकोऽर्थः ।

डुंगर उप्परि० ઇત્યાદિ ગાથાનો અર્થ કહેવાથી સુગમ છે. ॥ १२ ॥

जिवं मुज्जवायं ॐ ह्रीँ ठः ठः स्वाहा એ મંત્ર ગણી હાથ ઉપર દીધાથી હેડકી આવતી રહે. तथा ॐ उदितो भगवान् सूर्यः पद्महस्तः केतनः ।
आदित्यस्य प्रसादेन अनुदस्यार्धभेटकं नाशय नाशय स्वाहा वार १०८ આવર્ત હાથ દેઈ ગુણીએ. અથવા કુંકુમ કરી ભૂર્જપત્રિ એ મંત્ર લિખી યંત્ર કરી કાનિ બાંધીએ આધાશીશી જાય ॥१३॥
जहा ॐ इटीतो० ॐ इरि मिरि भस्मंकरि स्वाहा वार ७,

[1] ख "उपशाम्यति" । ग.-घ ।

जु उँ चक्रवाकी सुवाहाय मंते वडे सत्तकीअंगमाणेण [1]सुत्ते ।
गुडेणं समंताभिमंते वि गोली जहा नासयंती जणे वालओली ॥१५॥

जहों यस्ततः क्षस्ततः स्वाग्रहेणं जिवं तेव ! पास ! नामं खणेणं ।
न वा चित्तमेअं जओ दंसणेणं सुही हुंति ते पाणिणो तक्खणेणं ॥१६॥

वृत्तिः ।

जु ॐ **चक्रवाकी** १५ इत्यादि । ॐ चक्रवाकी स्वाहा, सूत्रं [2]पुरुषप्रमाणं [3]सप्तवडं कृत्वा अनेन मन्त्रेण वार १०८ जपित्वा गुडमध्ये धूपोद्ग्राहपूर्वकं प्रक्षिप्य गुटिका कार्या, तां च गुटिकां [4]भक्षापयेत् वालकं [5]नाशयति ॥ १५ ॥

**जहों**०१६ इत्यादि । ॐ यः क्षः स्वाहा अनेनापि सर्वं तथैव कार्यं वालकोपशमः । तथा ॐ ह्री श्रीँ कलिकुण्डस्वामिने अप्रतिचक्रे जये विजये अजिते अपराजिते स्तम्भे मोहे स्वाहा । नरमानं कन्याकर्तितं सूत्रमादाय रवौ १०८ जपपूर्वं खण्डानि कृत्वा गुडमिश्रैकविंशतिगुटिकाः कृत्वा भक्षयेत् वालको

वार्तिकोऽर्थः ।

२१, १०८ ઇણઇ મંત્રઇ કરી પાણી મંત્રી પાઇજઇ, અથવા પેટ છાંટીયઈ ઉદર પીડા ઉપશમઇ સર્વ દૂખતુ રહઇ. ॥ १४ ॥

जु ॐ चक्रवाकी १५ વૃત્તનઇ વિષઈ ॐ चक्रवाकी स्वाहा विधि-કુમારી બાલિકા કાતિયઉ સૂત્ર પુરૂષ પ્રમાણ વડ ૭ કરી તેહના ७ ટુકડા કરી ઇણિ મંત્રિ કરી વાર ૧૦૮ જપી ધૂપ ઉગાહી ગુલની ગોલી મધ્યે તે ઘાલી ખવાવિયઈ વાલઉ જાઈ સત્યં ॥ १५ ॥

जहों यस्ततः क्षः १६ વૃત્તનઈ વિષઇ ॐ यः क्षः स्वाहा ઇણી મંત્રિ કરી જલિ પૂર્વિલી વિધિ કીજઇ ( વાર ૧૦૮ મંત્રી કુમારીકાંત્યું

१ °माणेसुणत्ते° क । २ °नरमानं° क । ३ °सप्तशिरं° ख। ४ °तद्गिलने वालको नश्यति । ° क। ५ °वालको न भवति° ख ।

जिव ॐ इटि तिटि स्वाहा मंति वार उ अट्ठुत्तर सयं निब्भंति ।
फरकविलाई उंजिअ जाई तिम तुह पास ! नामसज्झाइ ॥ १७ ॥

वृत्तिः ।

न भवति । ॐ क्रौं क्रूं क्षीं ह्रीं स्वाहा । वार २१ तैलमभिमन्त्र्य दीयते बालको नश्यति । ॐ ह्रौं थौं क्ष्म्ल्व्र्यूं स्वाहा । अनेन मन्त्रेणार्कपत्राणि ७ संलिख्य चुल्के बध्यते । तथा तन्त्रोपरि बन्धनाद्वा उपशाम्यति । ॐ समे समे भ्रमते भ्रमते गर्दभो ग्रामके सिउ अमुकस्य महूरकं बन्धामि ठः ठः स्वाहा । अनेन मन्त्रेण वार २१ उज्यते । तथा रवौ कुमारिकाकर्तित-सूत्रं सप्तगुणदवरकं कृत्वा भणित्वा एकैका ग्रन्थिका देया धूपप्रदानपूर्वकं । एवं ग्रंथि ७ तद्दवरकमभिमन्त्र्य तदुपरि बन्धनाद् वा बालको याति । इदमनुक्तं दृष्टप्रत्ययमिति लिखितं ॥ १६ ॥

जिवं आ० १७

ॐ इटि तिटि स्वाहा ३ दिनं यावत् १०८ वारान् वदने कापबिलाई याति ॥ १७ ॥

वार्तिकोऽर्थः ।

सूत्र शरीर प्रमाणु ७ टुकडा करी गुल गोणीमांहि घालीने )
वालउ जाय. ॐ ह्रां थीं फणिकृणस्वामिने अप्रतिचक्रे जये विजये ! अजिते अपराजिते स्तम्भे मोहे स्वाहा कुमारी कांतिनउ सूत्र पुरुष प्रमाणु लेइ आदित्यवारि १०८ ओषध मंत्री जपी गांठ २१ दीजइ पछइ गुलमिश्र गोली दीजइ खवाविय वालउ जाय. दृष्टप्रत्ययोऽयंमन्त्रः । स्तवनपाठेऽस्य धिनोऽप्ययं गुरुवनुसारतोऽलेखि ।

जिवं ॐ इटि० १७ वृत्तनय विषम ॐ इटि तिटि स्वाहा ए मंत्र ३ दिन १०८ वार उंजियइ कापबिलाइ समाधि थाय. ॥ १७ ॥

१ "णति" फ

जु उँ चंद्रपारिश्रमं द्विः सुवाहा मुणा हत्थमाणं सरं गिण्ह वाहा ।
हरे रिंघिणीं ताडिया तेण मंते जिवं तेव ! पासो किओ जे हु चित्ते॥१८
गडूची हरिद्दा य रंधूअसन्नं तहा दुद्ध मेलेवि गोली मणुन्नं ।
हरे पीसि दिन्नं वणं तक्खणेणं जिवं तेव! ते पास ! नामं खणेणं ॥१९॥
जहौँ ह्रीँ ततो ग्रां च हुं फट् वणेणं जणे डंजिअं साइणी तक्खणेणं।

वृत्तिः ।

जुॐ चन्द्र० १८

ॐ चन्द्रपरिश्रमः चन्द्रपरिश्रमः स्वाहा । हस्तप्रमाणं शरं गृहीत्वा रिंघिणीवातं ताडयेत् दिनानि २१ यावत् [1]नश्यति विशीर्यते वा ॥ १८ ॥

गुडूची० १९

गडूची हरिद्रा धूंसउ द्रो सममात्रया एकत्र संमील्य जलेन वर्तयित्वा वध्यते व्रणो याति । तथा ॐ पक्षि स्वाहा यः यः यः फट् स्वाहा । दुष्टव्रणमन्त्रः । ॐ वं क्षः स्वाहा । गडमन्त्रः । एतावप्यनुक्तौ दृष्टप्रत्ययौ १९

जहौं ह्रीं० २०

ॐ ह्रीं ग्रां हुं फट् स्वाहा हस्तवाहनं १०८ शाकिनी[2] याति ।

वार्तिकोऽर्थः ।

जु ॐ चन्द्र० १८ वृत्तनई विषई ॐ चन्द्रपरिश्रमः चन्द्रपरिश्रमः स्वाहा હાથ [3]પ્રમાણુ શર લેઈ દિન ૨૧ રાંધિણિ તાડીયઈ (ઝાડો દીજઈ) રાંધિણિવાય જાઈ ૧૮

गडूची १९ वृत्तनई विषई ગિલોઈ, હલિદ, ધમાસઉ, દ્રોય એ સર્વ સમમાત્રા એકત્ર મેલી પાણી સંઘાતિ પીસી વ્રણ વિષઈ વ્રણ મંત્ર. તથા લગાડીયઈ દુષ્ટ વ્રણ જાઈ. તથા ॐ पक्षि स्वाहा यः यः यः फट् स्वाहा ॐ वं क्षः स्वाहा ગડ મંત્ર. એ બેઉ મંત્ર અનુક્ત ઇહાં કહ્યા છઈ ॥૧૯॥

जहौँ ह्रीँ ततो २० वृत्तनई विषई ॐ ह्रीँ ग्राँ हुँ फट् स्वाहा वार

---

१ °निर्याति° ख । २ °शाकिन्यो नश्यन्ति° क+ख। ३ °હાથ એક લાંબે

चणीमूल हिंगू अ सुंठी अ नासं जले पीसि कीअं तहुज्जोइ यासं ॥२०॥
जिवों पक्षिपक्षो सुवोहेति मंते हरे वाहिए हत्थि भूए खणंते ।

वृत्तिः ।

तथा वणिमूल हिङ्गु-सुंठि सममात्रया जलेन सह पेषयित्वा नासो [2]देयः शाकिनी याति ॥ २० ॥

जिवों पक्षि० २१

ॐ पक्षि पक्षो स्वाहा । हस्तवाहतं २१ [3]भूतदोषोपशमः । तथा ॐ अप्रतिचक्रे फट् विचक्राय स्वाहा । ६४ सर्षपा जलेन वार ७ प्रक्षाल्य अनेन तन्मध्यादेकैकं अभिमन्त्र्य मृतकटोरिकामध्ये तारयेत् समैः शाकिनी, विषमैर्भूतदोषः। अथ न तरति तदा भूतशाकिन्योर्मध्यात् एकोऽपि दोषो नास्ति । एवं च [4]दोषज्ञाने अनेनैव मन्त्रेण सप्ताभिमन्त्रितमुद्रजलं ताडयेत् चीवरं फाटयेत्

वार्तिकोऽर्थः ।

१०८ ઉંજિયઇ ઝાડિયઇ શાકિની દોષ ઉતરઇ. તથા વણિમૂળ, હિંગુ, સુંઠિ, એ ૩ સમમાત્રાઇ પાણી સઘાતિ પીસી કરી નાસ દીજઇ શાકિની જાઇ. સત્યં ॥ ૨૦ ॥

જિવોં પક્ષિ ૨૧ વૃત્તનઇ વિષઇ ॐ પક્ષિપક્ષો સ્વાહા એણુઇ મંત્રઇ કરી [5]ઝાડઉ દીજઇ ભૂત ઉપશમઇ. તથા ॐ અપ્રતિચક્રે ફટ્ વિચક્રાય સ્વાહા વિધિ–સર્ષપ ૬૪ જલેન વેલા ૭ પખાલી કરી એક એક સરિસવ મંત્રિયઇ, વાટલી પાણી ભરી તે મધ્યે સરિસવ ઘાલીયઇ, દોષાલ માણુસનઇ કિનારઇ અધસિ કચોલી માંડીજઇ, તે ધોઇ સરિસવો એક એક મંત્રી કચોલીમાહિ મુંકી જઇ. પછે દોષાઇલ કન્હઇ ગુણાઇજઇ, દોષાઇલ ગિણુઇ નહી તઉ કુમારી છોકરી તથા છોકરા પાસે ગુણાઇજઇ, તે સરિસવ મધ્યે જે સરિસવ તરઇ તે જઉ સમ હવઇ

१ °हाव मंते° क । २ °नासो दीयते शाकिनी नश्यति° क-ख। ३ °भूतदोषो नश्यति° क-ख ४ °दोषे परिज्ञाते° क-ख । ५ °દિયઇ હાથ ફેરી જાઇ, અથવા ચિટાંગુલી ભીંચી જાઇ° ग ।

जिवं पास ! ते नामु एवं मुणित्ता जि लीणा सुही ते हुआ झत्ति सत्ता ॥
ॐ एहु उग्गए सूरो एए झिज्झंति तिमिरसंघाया ।
नलिणीवणो विवुद्धो अमुगस्स जरं पणासेउ स्वाहा ॥ २२ ॥
सयं मंतु अट्ठुत्तरं जस्स नामं भणेवी गुणिज्जंतु तं निव्विरामं ।
हरेई अ सत्तावरी जिम्व हत्थे सिया पास ! ते तेव ! नामत्थि सत्थे ॥

वृत्तिः ।

यथा यथा ताडयते स्फाटयते तथा तथा शाकिनी क्रन्दमाना मुञ्चति । अथवा अनेन हस्तवाहनेऽपि शाकिनीभूतप्रेतपिशाचादीनां नाशः स्यात् निश्चयेन वहुशो दृष्टप्रभावोऽयमनुक्तोऽपि लिखितः ॥२१॥

ॐ एह जु २२ इत्यादि० इयं मन्त्रगाथा १०८ यस्य नाम्ना गुण्यते तस्य [1]ज्वरं प्रणश्यति । तथा शुष्कशितावरीखण्डं हस्ते वद्धं ज्वरं नाशयति । २२ । २३ ।

वार्तिकरूपोऽर्थः ।

२,४,६ थाइ तउ शाकिनी दोष जाणिवउं, अनइ जउ १,३,५,७ विषम उपरि[2] तरि आवइ तउ भूतदोष जाणिवउं, अनइ जउ १ मात्र न तरइ तउ कोइ दोषाश्रय नहीं. इम शाकिनी, भूतना दोष जाणी एणइ मंत्रइ करी ७ वार ढालो उखल मंत्री करी ( खांडीयइ ) ताडीयइ, जिमजिम लुगडुं मुसलस्युं फाडियइ तिमतिम शाकिनी नासी जाइ. अथवा उंजियइ, ऊाडियइ शाकिनी भूतदोष निवर्तइ निश्चय करी. घणीवार दृष्ट प्रत्यय ए मंत्र सत्यम्. अणकह्यो लिख्यो छे. ॥ २१ ॥

ॐ ए हुजु इत्यादि २२ गाथा प्रकटार्थ. ए गाथा जिणरो नाम लेई १०८ वार गुणीजइ तिणरो ज्वर जाई. तथा शुष्क शितावरी हाथि बांधी जइ ज्वर जाई. ॥ २२ ॥ २३ ॥

१ °ज्वरो याति° क-ख । २ °गिणतां भूलइ, खबर न पडइ तउ शाकिनी दोष नही. भूत दोष पिण नही° ग ।

जिवं ॐ हरे ह्रिंभ्रमदिथ चक्खुः सुवाहेति पूगं कउं कट्कटाक्षं ।
हरे दंतदोसं प्रजन्येह निद्दा खणे तक्खणे तेव ! ते पास ! मुद्दा ॥
जिवं सेयवंझाइ कंकोडियाए जिवासंधिना गावि दुद्धे कियाए ।
हवे पुत्त इत्थीण सिद्धीइ जोगे तिवं पास ! ते नाम झायंति लोगे ॥
बंधस्स मुक्खकरणी वासरजप्पं सहस्सजावेणं ।

वृत्तिः ।

ॐ हर ह्रिं० २४ इत्यादि, हर हर भ्रम भ्रम चक्षुः स्वाहा । वार १०८ पूगीफलान्यभिमन्त्र्यन्ते, स्वापकाले तत् खण्डं मुखे क्षिप्त्वा सुप्यते ततो दन्तकडकडाटो न भवति ॥ २४ ॥

जिवं सेत० २५ इत्यादि, श्वेतवन्ध्याकर्कोटिकामूलं एकवर्णगोदुग्धेन सह पिबेत् वन्ध्या गर्भं धारयति। एवमश्वगन्धामूलमपि । परं स्नानानन्तरं कार्यम् ॥ २५ ॥

बंधस्स २६-२७ इत्यादि। ॐ ह्रिलि ह्रिलि नमः स्वाहा इतिपर्यंतं प्रतिदिनं सहस्रमेकं गुण्यते शीघ्रं बन्दिमोक्षो भवति । तथा हा ह हा इति वार्तिकोऽर्थः ।

जिवं ॐ हरह्रि २४ वृत्तनुं विवरण हर हर भ्रम भ्रम चक्षुः स्वाहा એમનુંમ મંત્રમ કરી વાર ૧૦૮ સુપારી ફાલિ મંત્રી મુખ મધ્યે ઘાલિઇ દાંત કરકડતઉ રહઇ ૨૪

जिवं सेत० २५ વૃત્તનઉ વિવરણ એતવંધ્યા કંકોડીની જડ એકવર્ણું ગાયના દુગ્ધસેતી ઋતુસ્નાન કિયાં પછી પાઇજઈ તઉ વંધ્યા ગર્ભ ધરઇ, ઇમ આસગંધા મૂળ પુષ્યિ પાઈજઇ, ગર્ભ થાઇ, પરં ઋતુ સ્નાનાનંતર દિન ૩ દીજઇ તથા ઉંધાહૂલી પંચાંગ છાયાશુષ્ક દીજઇ. ૨ ટાંક મધુરસું ગોળી બાંધીઇઇ. ૬ ઋતુસમયે વંધ્યા પિણુ ગર્ભ ધરઇ. ॥ ૨૫ ॥

बन्धस्स २६-२७ ॐ ह्रिलिह्रिलि नमः इति पर्यंत એ મંત્ર દિનં પ્રતિ સહસ્ર એક ગુણિયઇ, વદિશું બંધિ મોક્ષ થાઇ. (તથા હાહહા

जिवौं क्रौं सुवाहेति भुज्जे लिहित्ता धरे वामअंगुहि पक्खित्तु तत्ता।
वरं रोयणा मेलि टिहं व काअं जयं देइ पासे वि जं नाम लीअं ॥३०॥

जिवों ह्रींतक्रोंह्रीं हूं फट् सुवाहे
मिणा जाव दिन्नं फलाए सिणाहे ॥
वसे आणए ह्रौंव ते नामि सव्वं
अओ पासनाहुप्प किंपी अपुव्वं ॥ ३१ ॥

वृत्तिः ।

गोरोचनाभ्यां भूर्जे लिखित्वा वामकराङ्गुल्यां वींटीकृत्वा ध्रियते राजकुलादौ जयो भवति । तथा कुङ्कुमगोरोचनया तिलकं कृत्वा व्रजति राजकुलादौ जयङ्करः ॥३०॥

**जिवौं** ह्रीँ० ३१ तमित्यादि । ॐ ह्रीँ क्रौँ ह्रीँ हूँ फट् स्वाहा । अनेन मन्त्रेण पूगफलवस्त्रपत्रकुसुमानि वार १०८ अभिमन्त्र्य यस्मै दीयते स सानुकूलो भवति । तथा ह्रींमन्त्रः केवलोऽपि जप्यमानः [3]सर्वासीष्टार्थप्रदः, प्रणवादिर्नमोऽन्तश्च प्रागेव व्यावर्णितस्वरूपः ॥ ३१ ॥

वार्तिकोऽर्थः ।

સ્થાનકિ. ડાવઇ હાથઇ પહિરીયઇ રાજભય દિવાનભય ન થાઇ. તથા કુંકુમગોરોચના કરી એણઇ મંત્રઇ તિલક કીજઇ રાજકુલ વશ્ય થાઇ, જય હુઇ ॥ ૩૦ ॥

જિવૌં હ્રીં ૩૧ વૃત્તનઇ વિષઇ ॐ હ્રીં ક્રૌં હ્રીં હ્રૌં હૂં ફટ્ સ્વાહા સુપારી, પાન, વસ્ત્ર, ફૂલ, ઇણઇ મંત્રઇ કરી વાર ૧૦૮ મંત્રી કરી જેહનઇ દીજઇ તે વશ્ય થાઇ. તથા ॐ હ્રીં નમઃ એ મંત્ર સદા જપિયઇ સર્વ ઇષ્ટસિદ્ધિ થાઇ. મનોવાંછિત સંપજઇ ॥ ૩૧ ॥

१ °पावणा° क । २ °वदे° क-ग । ३ °सर्ववाञ्छितकरः° क ।

जिवँ ह्रीँ श्रीँ क्लीँ कलिकुण्डदण्डस्वामिन्नागच्छदि अखंड ।
परविज्जाच्छेदं कुरु कुरु स स्वाहा इति निसज्झं निरुत्त ॥ ३२ ॥
भिवंती जवित्ता य तेलं तएणं पलेवाउ नाभिस्स त्थीओ[1] खणेणं ।
जिवं चाउलं मेधिर्यां[2] पीसि वंसा जडा पास । ते नाम तेम प्पसंसा ॥
वज्जपहरणमुग्गरमुट्ठिआर विन्नवडं भराडा खित्तवाल ।
नरनयरनारीपुरपट्टणाइं वैणविहुरविंझेगुहिरंवराइं ॥ ३४ ॥

वृत्तिः ।

जिवौं ह्रीँ० ३२-३३ इत्यादि । ॐ ह्रीँ श्रीँ झीँ कलिकुण्डदण्डस्वामिन्ना-गच्छ आगच्छ परविद्याच्छेदं कुरु कुरु स्वाहा । वार २१ अथवा १०८ वारान् तैलमभिमन्त्र्य प्रसूतिकाले नाभिलेपे सर्वाङ्गमर्दने सुखेन प्रसूतिः । तथा वंशजदतण्डुलोदकेन पेषयित्वा पाने सुखेन प्रसूतिः ॥ ३२-३३ ॥
वज्जपहरण० ३४ इत्यादि वृत्तेन ह्रीँ खोभि ह्रीँ खोभि [5]एतत्पर्यन्तेन मन्त्रेण कर्कराः ७ गंडाहरमध्यात् गृह्यन्ते, वार १०८ जपित्वा क्षीरवृक्षः एकैकेन कर्करेण ताड्यते, प्रथमं कर्करं मुक्त्वा सप्तमो मध्यमो वा कर्करो

वार्तिकोऽर्थः ।

जिवँ ह्रीँ श्रीँ० ३२, भवंति जवित्ता य० ३३ वृत्तनुं विधि ॐ ह्रीँ श्रीँ क्लीँ कलिकुण्डदंडस्वामिन्नागच्छ आगच्छ परविद्याच्छेदं कुरु कुरु स्वाहा वार २१, १०८ मीठुं तेल मंत्री स्त्रीनाभि अधःकाय चोपडीए, स्त्री सुखे प्रसवे. (स्त्री छूटे) ॥ ३२-३३ ॥
वज्जपहरणमुग्गर० ३४ तहिँ खोभिहिँ ३५ तओ पट्टणाईइ ३६ ॐ वज्जमुग्गर तहिँ खोभिँहो खोभि ए मंत्रने छेडे ह्रीँ स्वाहा । कहीजे एणे मंत्रि करी कांकरी ७ खेत्र (गडाहरा) भूमि मध्य थकी लीजे, वार १०८ जपी मंत्री क्षीरवृक्ष आहे, अथवा रायणि

१ °थीओ° ग । २ °मिघीया° क । ३ °घण° ग । ४ °विज्ञप्ति° ग । ५ °एतत्पदम् । अनेन° क-ख ।

तह्रिँ खोमि ह्रीँ खोमि एएण जत्ता सयं कक्करा सत्त खीरद्दुखित्ता।
लिए वीसगंडाहरा उप्पडंता पुरं मिल्हि मज्झं तु वत्थेण तंता॥३५॥
तओ पट्टणाईइ मज्झंमि मग्गे पक्खित्तोणुजाई करेंतंमि वग्गे।
जिवं तेव! ते नामु एयं मुणंतीति पामुत्स उँ ह्रीं नमत्थं कुणंती॥

डिल्याशीर्नागकन्या नयनसुखपुरी मांडहिल्लाप्रवौन्दी
श्रीसूपावन्यनेकक्षितितलतिलकग्रामवर्गेषु नन्दी।

वृत्तिः।

गृह्यते। [1]वस्त्रेण भूमौ अप्राप्तः आगत्य च नगरादिमध्ये चतुःपथे [2]निःक्षिप्यते तत्रस्थः सर्वोऽपि लोकोऽनुयायी भवति ॥३४–३५॥३६॥

ॐ चिवि चिवि स्वाहा। अनेन मन्त्रेण वार २१ सूत्रमभिमन्त्र्य खट्वापादेऽभिबध्यते शत्रूणां मुखस्तम्भः। ॐ ह्रीँ सर्वे ग्रहाः सोमसूर्याङ्गारकबुधबृहस्पतिशुक्रशनैश्चरराहुकेतुसहिता मम सानुग्रहा भवन्तु, ॐ ह्रीँ असिआउसा स्वाहा। २१। ७ स्मृता ग्रहपीडां नाशयति। दृष्टिमहादृष्टि विदृष्टि स्वाहा। दृष्टिउत्तारणमन्त्रः। ॐ राजा मुखि राजाधिमुख वश्यमुखि वश्याधिमुखि वश्याधिमुखि ॐ श्रीं श्रीं श्रूँ क्लीं क्लां सर्वजनस्य मुखद्वयं मम वश्यं कुरु कुरु स्वाहा। पानीयमभिमन्त्र्य मुखं क्षालनीयं सर्वजनवश्यता।

ॐ विये विये गोविये टगमग स्वाहा। वार २१ जिह्वादिमृतकलं नीत्वा वामकरेणाधोमुखं तिलकः क्रियते सर्वजनवश्यता।

वार्तिकोऽर्थः।

એકેક કાંકરુ કરી તાડીયઇ, પહેલું ૧, સાતમું ૭ અથવા ચઉથું કાંકરૂ ભૂમિ અણપડિયઉ લુગડઇ કરી લીજઇ, પછઇ આવી નગરમધ્યે ચઉહટઇ, ગલિ, પોલિ, પ્રમુખસ્થાનકે તે કાંકરઉ નાખી–

१ °वाससा° क। २ °निक्षिपेत्° क–ख।

कृत्वा यत् प्रापि पुण्यं तदिह जैनहितं स्वे सुसद्धोपचारात्
मन्त्रै रत्नैः सुपूर्णं कलशमिव कृतं पार्श्व ! ते स्तोत्रमेतत् ॥२७॥

वृत्तिः ।

ॐ घपाल घपाल मांहि सीनि सीनीमांहि सीस करामघाहइ भीम
ऽताराइ बावनप्रचण्डवीरकी शक्ति फुरइ । एकसासि वार २७ उञ्जयते ।
शिरोऽर्तिर्याति । अनुक्तान्यप्येतानि सोपयोगित्वाल्लिखितानि ।

जिम एयं मंताई कुणंति पुण्णुत्तमेव तुह नामं ॥
एयं कुणेई सव्वं ॐ ह्री नमः [4]मंतविज्जाण ॥ १ ॥
कहइ वाणारिओ पुण्णकलसो इमं
थवणु जिम दिट्ठु तिम लिहवि मंते समं ।
किंपि वित्तीइ जण मुणवि घणदुक्खिअं
तं गुणित्ता तयं होउ जणि सुक्खिअं ॥ २ ॥

वाचनाचार्यपुण्यकलशगणिकृतिरियम् ।

वार्तिकोऽर्थः

જાઇ ( ગારગ માંદી ગાડીજાઇ ) તે નગરનઉ લોક સહુ વશ્ય થાઇ. નગરમધ્યે જય જય હુઇ. લોક સર્વ તેહના આજ્ઞાકારક હુઇ. (માયા કરઇ, જિ કાંઇ કહીજઇ મઉ કરઇ) સત્યં, વિશેષ આમ્નાય એહના શ્રીગુરૂપ્રસાદ થકી જાણિવા.

---

१. "जनहितं" ग । २ "सुसद्धोपकारात्" क-ग । ३ "स्तो-त्रमिदं तत्" ग । ४ "मंतति उज्जाणे" ख । "मंतविज्जाण" क ।

## श्रीशिवनागविरचितं

# श्रीपार्श्वनाथस्तोत्रम् ।

धरणोरगेन्द्रसुरपतिविद्याधरपूजितं जिनं नत्वा ।
क्षुद्रोपद्रवशमनं तस्यैव हि महास्तवं वक्ष्ये ॥ १ ॥
सुरलोकनाथपूजित ! हर हर हरहासरोपजुष्टमपि ।
पन्नगविषं महावल ! शुक्लध्यानानलाक्षेपात् ॥ २ ॥

---

वृत्तिः ।

प्रणिपत्य लोकनाथं सर्वज्ञं सर्वसत्त्वहितयुक्तम् ।
मन्त्रस्तवस्य वृत्तिं वक्ष्ये [1]ज्ञातोपदेशेन ॥

येषामन्यगारुडेष्वज्ञानतो ग्राहस्तान् प्रत्याह—

उक्तानि च तत्त्वज्ञै[2]र्विपतिषु शास्त्रेषु मन्त्रबीजानि ।
तान्यपि भगवन्मन्त्रस्तवानुसारेण सञ्चिन्त्य ॥
सङ्ग्रहः कण्डकं स्तोभो मण्डलं स्तम्भनिर्विषम् ।
सङ्कामं चार्द्धनारीशं जैनाद्धाक्षरयोगतः ॥ भवतीति क्रिया ॥

**धरणोरगेन्द्र०** जिनं नत्वेति क्रिया । किंविशिष्टम् ? धरणश्चासाउरगेन्द्रश्च स च सुरपतयश्च विद्याधराश्च तैः 'पूजितं' पुष्पादिभिरर्चितम् जिनं नत्वा । यैः (ये) क्षुद्रसत्वैः कृता उपद्रवास्तेषां 'शमनं' नाशकं नत्वा तस्यैव महास्तवं 'वक्ष्ये' कथयिष्ये इत्यर्थः । एतच्चादौ मङ्गलार्थम् ॥१॥

**सुरलोक०** हे सुरलोकानां नाथैः पूजित ! पन्नगविषं 'हर हर' नाशय नाशय । किम्भूतम् ? हरस्य हारो–वासुकिस्तस्य रोषस्तेन 'जुष्टम्' आसेवितम् । हे महावल ! [3]निर्विषभावं नय । कथम् ? शुक्लध्यानमेवाग्निस्तस्य क्षेपेण । अपिशब्दाद् विषमपि लोकानां नैगसाद्यभिगमेन विनाशयेति ॥

---

१ ०ज्ञानो० क । २ ०द्विं० क । ३ ०निर्विषतां० क ।

विद्यासहस्रषोडशगणनायकजोरवर्धितानन्द !
पन्नगकुलं कुलोत्तम ! निर्विषतां नय नयाभिगमात् ॥ ३ ॥
सर्वेऽपि महानागा नागाधिपकृतफणा [1]तपच्छाय ! ।
कलिकुण्डदण्डनिहता नश्यन्ति विषापहारेण ॥ ४ ॥

वृत्तिः ।

अस्यामार्यायां यन्त्रमुपन्यस्तम् । तन्मध्यमगण्डिकाभिधानस्य प्राक् प्रतिपादितम् । 'पार्श्वनाथे'त्यभिधानं क्रमाच्चतुर्षु दलेषु न्यसेत्, दलाग्रेषु दलान्तरेषु च हर हरेति क्रमेण न्यसेत् 'नयस्य' हकारस्य आभिमुख्येन गमो नयाभिगमस्तस्मात् नयाभिगमात् पन्नगविषं निर्विषतां नयेति ॥ २ ॥ एतद्यन्त्रस्य स्थापना । [ प्रथमं यन्त्रम् १ ]

विद्यासहस्र० स च[2] पूर्वसिद्धाभिः कलाभिर्वेष्टनीयो भूयस्त्रिगुणमायया चेति । अस्य यन्त्रस्य [3]फलम्—

कुङ्कुमगोरोचनया भूर्जे संलिख्य वामभुजदण्डे ।
धारयति यस्तु पुरुषः[4] स भवति जनवल्लभः श्रीमान् ॥
अपुत्रा लभते पुत्रं निन्दवो जीवितप्रजाः ।
यन्त्रधारणमात्रेण दुर्भगा [5]सुभगायते ॥
प्रशमयति विषं न शुष्कं सन्निहिता लूतपिटकभूताश्च ।
संस्मरणादस्य सतां पापमपि नाशमुपयाति ॥
विन्यस्तं करतलयोरेतद् विषनाशनं क्षणात् कुरुते ।
ॐ हर हुंहः भणनाद् वामकराक्षेपणनियोगात् ॥

द्विपुटे भूर्जे विद्या लिखनीया ॥ ३ ॥

सर्वेऽपि० नागानामधिपैः कृता फणाभिः आतपच्छाया यस्य, तस्यामन्त्रणम् । हे भगवन्! तव पादप्रसादेन नश्यन्ति सर्वेऽपि महानागा भटाः इव कलिकुण्डदण्डनिहताः सन्तः । कथम्? अपहृतविषदाला इत्यर्थः ॥ ४ ॥

१ °फणाधिप° क । २ °ॐसर्वं° ग । ३ °साफल्यम्° क । ४ °स्त्रीवा° ग । ५ °सुभगा भवेत्° ख ।

ॐकारसम्पुटगतं वामकरे दण्डरूपकं ध्यातम् ।
ज्वालालिपरिस्फुरन्तं कलिकुण्डाज्ञामिवामोघम् ॥ ५ ॥

नाशयति सर्वनागान् भूतान् व्यालग्रहांश्च विस्फोटान् ।
ज्वालागर्दभशाकिनिविषवेगांश्चापि रोगांश्च ॥ ६ ॥

दैत्यामरेन्द्रपूजित ! निर्नाशितदुष्टकर्ममलपटल ! ।
क्षिपय जिन ! हुं फट् [२]त्वं पन्नगकुलविषमविषदर्पम् ॥ ७ ॥

वृत्तिः ।

तस्यैव कलिकुण्डदण्डस्य फलस्वरूपमाह—

**ॐकारं० नाशयति०**

मारण स्तम्भनं चैव शत्रोरुच्चाटनं तथा ।
मोहनं द्वेषणं चापि क्रियाभेदात् करोति तत् ॥ ५ ॥

ॐहूँ ॐहूँ ॐहूँ ॥ ६ ॥ [ द्वितीयं यन्त्रम् २ ]

**दैत्यामरे०** हे दैत्यामरेन्द्रपूजित ! निर्नाशितं दुष्टकर्म एव मलपटलं येन स तथा । तस्यामन्त्रणम । हे जिन ! क्षिपय–क्षयं नय । किं तत् ? पन्नगकुलानां विषमं विषदर्पम् । हुं फट्कारनादेनेति ॥ ७ ॥

निर्विषीकरणमन्त्रबीजं सूचितम् । अष्टदलपद्ममध्यस्थस्य देवदत्तस्य क्रमेण दलेषु ॐ नमो अरिहंताणं जिननामाक्षरसहितानि कृत्वा । क्षिपहुं फटपदैस्तद् वेष्टयेत् । तत् करशाखासु ध्यात्वा गरुडकल्पेन वामकरेण तत्पदोच्चारणसहितेन सर्वं विषमविषं अपहरतीति । यन्त्रं दर्शयति–

[ तृतीयं यन्त्रम् ३ ]

१ ° ज्वालाभिः° क । °ज्वालालि° ख । २ ° फुडुत्थं° क ।

निर्मथितभवभयोल्वण ! षोडशविद्याधिपत्वमुपपन्न ! ।
श्रीपार्श्वनाथ ! विषहर ! हिलि हिलि मातङ्गिनी स्वाहा ॥ ८ ॥
ॐ हर हर हुतभुक्पवनेरितज्वलितमङ्कुशं ध्यायेत् ।
उत्थापयति सरोषं पुनरुक्तैर्भोगहस्तोऽयम् ॥ ९ ॥
आगच्छन्तु महानागाः पन्नगाश्च महाविषाः ।
गरुडस्येनां विद्यां हिलि हिलि मातङ्गिनी स्वाहा ॥ १० ॥

वृत्तिः ।

**निर्मथित०** निर्मथितं भवभयं उल्वणं–अधिकं येन सः, तस्यामन्त्रणम् । षोडशविद्याधिपत्वमुपपन्नं–प्राप्तं येन सः तथा, तस्यामन्त्रणम् । हे श्रीपार्श्वनाथ ! हिलिहिलि मातङ्गिनी स्वाहा प्रयोगेण विषं हरति यः स तथा, तस्यामन्त्रणं क्रियते । हे विषहर ! प्राणिनां जरामरणविषहर इत्यध्याहार्यम् ॥ ८ ॥

सूचितं परमं तत्त्वं पवित्रं यन्त्रमुत्तमम् ।
साधनं तस्य पुण्येऽह्नि क्रियते स्वामिनोऽग्रतः ॥
श्वेतवस्त्रः शुचिर्भूत्वा सितपुष्पविलेपनैः ।
समभ्यर्च्य जिनं पार्श्वं बलिं कुर्यात् स्वशक्तितः ॥
आत्मरक्षां ततः कृत्वा परमेष्ठिस्तवाक्षरैः ।
[1]नाभ्यास्याक्षिशिरोदिक्षु सोङ्कारैर्न्यासयोगतः ॥
पार्श्वनाथं पङ्कजान्तस्थमाम्नायाभिरावृतम् ।
देवीभिर्यन्त्र[2]माभिस्तद्द्व्यष्टसङ्ख्याभिरङ्गकैः ॥
विद्यां मातङ्गिनीं तस्य विलिखेच्च समन्त[3]तः ।
अष्टोत्तरसहस्रं तु जातिपुष्पैस्ततो जपेत् ॥
पूजयित्वा[4] ततः साधून् भूयः पार्श्वं च भक्तितः[5] ।

१ °नाभ्यास्यहृच्छिरा° ग–घ । २ °यन्त्रमाम्नाभि° ग । ३ °ततः क्रमात्° घ । ४ °पूजयेच्च° घ । ५ °श्रीपार्श्वं भक्तितः° ख ।

[1]ॐ पार्श्वनाथ ! सुरपतिमुकुटतटोद्घृष्टपादनलिनयुगम् ।
नागाष्टकुलविषापह ! हा हैं हे हौ हु हू हं हः ॥ ११ ॥

वृत्तिः ।

ततः सिद्धिं वहेद् योगं वाह्यौ विद्यासुसम्पुटम् ॥
शान्त्यर्थे शान्तिदं तस्य पुष्ट्यर्थे पुष्टिदं भवेत् ।
धनार्थे धनदं ज्ञेयं सुतार्थे सुतदं भवेत् ॥
सर्वसौभाग्यजननं सर्वोपद्रवनाशनम् ।
कर्तनं सर्वपापानां जिनभक्त्या भवेत् फलम् ॥ ९–१० ॥

[चतुर्थं यन्त्रम्. ४

ॐ **पा[१]र्श्वनाथ!** ० हे श्रीपार्श्वनाथ ! सुरपतीनां मुकुटतटानि तैः उत्–प्राबल्येन घृष्टं–परामृष्टं पादपद्मयुगं यस्य स तथाविधः तस्यामन्त्रणम नागानामष्ट कुलानि तेषां विषं तत् अपहन्ति यः स तथाविधः तस्यामन्त्र हे नागाष्टकुलविषापह !, कथम्? । हा हैं हे हौ हु हू हं हः प्रयोगे तस्यामन्त्रणम् । हे विषापह ! विषमविषं अपहर इत्यध्याहार्या क्रिया । अस्याम्— सूचितं कामदं यन्त्रं सर्वनागात्मकं परम् ।

नागानां हृदयं यस्मात् कालभेदेन[२] तु क्रमात् ॥
समभ्यर्च्य जिनं पार्श्वं पुष्पदीपानुलेपनैः ।
अष्टोत्तरसहस्रं तु चिचित्रकुसुमैर्जपेत् ॥
सिद्धो मन्त्रो गरुड[३] इव करोति विषनाशनम् ।
क्रीडते सर्वनागैस्तु[४] सर्वभूतभयावहः ॥
कजपत्रे स्थितान् नागान् यो[५] वहेत् शाकिनीभयम् ।
तस्योपजायते नैव दाघज्वरोपशामकम् ॥

ॐ हूँ पा हूँ र्श्व हूँ ना हूँ थ हूँ स्वा हूँ हाँ हूँ

१ °श्री° ग–घ । २ °कालभेदादिह° घ । ३ °गरुडवत्° ग °गरुत्मेव° घ । ४ °श्व° ख । ५ °नागा न्नो° ख ।

सकलभुवनाभिवन्दित ! गरुडस्त्वं पन्नगेन्द्रकृतपूज ! ।
विषमविषानलशमनो जलद इव जलप्लुतालोकः ॥ १२ ॥

वृत्तिः ।

आद्यन्तस्थो विपतिर्भगवन्नामान्तरेषु हूं न्यासः ।
न्यस्तो हस्तेऽपविषं करोति नागात्मकजलेन ॥ [ पञ्चमं यन्त्रम् ५ ]

ॐ पार्श्वनाथ हूँ स्वाहा । अस्यैव मूलमन्त्रस्य हूँकारं न्यसेत् विशेष इति ॥ ११ ॥

सकल० हे भगवन् ! सकलभुवनाभिवन्दित ! पन्नगेन्द्रकृतपूज ! गरुडस्त्वं वर्तसे । कथम् ? विषया एव विषं तदेवानलो विषयविषानलः तस्य यत् शमनं तत्र [1]जलद इव-मेघ इव । असावपि विशेष्यते ' जलप्लुतालोक ' इति । (विद्यां काक्वा) अस्यां विद्यां काक्वा सूचयति । पन्नगेन्द्रसमासान्तः सद्बीजयोगं साधयति । जलधरधाराधेयतया तद्बीजयोगं च । गरुडग्रहणात् क्षि प ॐ स्वाहा । [2]बीजान्याख्यातानि । भगवन्नामग्रहणाभिरयं लक्ष्मीर्भवतीति एतत् साधयति, (६) श्रीं । अत एषा विद्या रचिता-ॐ ह्रीँ लाक्षा प लक्ष्मीं कुरु २ ॐ स्वाहा । इति पूजा ।

पूजयित्वा जिनं पार्श्वं पुष्पधूपानुलेपनैः ।
शुचिर्दश सहस्राणि जपेद् विद्यां तदग्रतः ॥
शाकपिन्याककन्दाद्यैः सर्वधान्यैः फलैः शुभैः ।
दधिपक्वान्ननैवेद्यैर्बलिदीपेन सिद्ध्यति ॥
स्पन्दनं जायते गात्रे नाडीनां च प्रबोधनम् ।
[3]वामेडा स्थिरा पिङ्गला सुषुम्नोभयं तथा[3] ॥
स्त्रीपुंनपुंसकाख्यास्ताः साध्यासाध्यं च ज्ञापकम् ।
तत्प्रवाहात् [4] विज्ञानीयात् नैकविकल्पवर्तना ॥
स्तम्भ[5]स्तोभविषादीश्च निर्विषीकरणानि च ।
हां ह्रीं हूं ह्रैं ह्रौं ह्रः ठंठंठं (कः) करोति विद्यासमायोगात् ॥१२॥

१००८ दां विचित्रपुष्पैः ।

१ °शमन° ग । २ °बीजान्याख्यातानि° क ख-ग । ३ °वामेडा स्थिरा पिङ्गा सुषुम्ना सभय मता° ग । ४ °प्रवाहात्° ख । ५ °क्षोभ° ग ।

ॐ चुरु चुरु मुरु मुरु फुरु फुरु फर फर फार फार फलदस्त्वम् ।
किलि किलि कलकल कलितैः कलिकुण्ड ! कलाकलापज्ञ ! ॥१५॥

वृत्तिः ।

पूजाविधानतस्त्वेतद् वृत्तं कल्याणकारकम् ।
निष्फलं भक्तिहीनस्य जिनपादाम्बुजं यथा ॥
नृपवन्हिपिशाचानां हरितस्करहस्तिनाम् ।
नाशनं विपदुष्टानां शाकिनीशत्रुमर्दनम् ॥

[ अष्टमं यन्त्रम् ८ ]

कुङ्कुमगोरोचनया भूर्यदले कनकलेखिनीलिखितम् ।
घृतमधुमध्यनियुक्तं व्यर्थकरं शत्रुवर्गस्य ॥
हुं फट्कारविहीनं गृहनिहतं तत्कुलं क्षयं नयति ।
विपरुधिरचिताङ्गारैः श्मशानचीवरेऽग्निसन्निहितम् ॥
यन्त्रं मङ्गलदिनेऽमावास्यायां वा ॥ १४ ॥

ॐ चुरु चुरु०—हे कलिकुण्ड ! कलानां कलापः कलाकलापः तं जानातीति कलाकलापज्ञः, तस्यामन्त्रणम् । फारादपि फारतरं फलं प्रयच्छतीति फारफारफलदस्त्वम् । भवसीति क्रिया । ॐकारपूर्वैः चुरु चुरु मुरु मुरु फुरु फुरु फर फर फारफारपदैश्चिन्तामणिकल्पैः किलि किलि कलकलकलितैरेतदुपलक्षितैरिति ।

चतुरष्टषोडशदलं जिनवीजकलाभिरावृतं कमलम् ।
अपहरति समस्तविषं न्यस्तं कुम्भे करे दण्डे ॥
कुङ्कुमगोरोचनया लिखितमिदं दुष्टपिटकलूताख्यान् ।
ज्वालागर्दभशाकिनीविस्फोटकसङ्घांश्च नाशयति ॥ १५ ॥

[ नवमं यन्त्रम् ९ ]

ॐ यः यः यः सः सः हः हः वः वः उरुरिक्षय रुह (हु)
रुहान्त ! शान्त ! त्वम् ।
विषवन्हेर्विध्यपनं कुरु शीघ्रमुरुप्लवाख्यानात् ॥ १६ ॥

दंष्ट्राकरालभीषणकुपितासुरजलदजलधरापातैः ।
अभ्यस्ततपोऽनलजाज्वलन्त ! दह दुष्टनागविषम् ॥ १७ ॥

वृत्तिः ।

ॐ यः यः० हे शान्त ! त्वं मम [1]विषात्मकस्य वन्हेर्विध्यपनं–उपशमनं शीघ्रं कुरु–कुरुष्व । कथम् ? उरुप्लवाद्–विस्तीर्णवेगात् । यः यः सः सः हः हः वः वः उरुरिक्षय रुहरुहान्तमन्त्रपदाख्यानजलसेकात् इति । यः यः सः सः हः हः वः वः कलितं पद्मं हृदि दष्टकस्य विन्यस्य पार्श्वेषु तस्य बीजानि, मध्ये देवं कलातीतम्—

मन्त्रमुद्राकलातीतं ह्रस्वदीर्घकलोज्झितम् ।
सर्वतत्त्वनिरपेक्षं ध्येयधारणवर्जितम् ॥
काकेभवृषभोष्ट्रेभ्यो धूताग्निनाश[1]सम्भवात् ।
निर्विषीकरणं कुर्याल्लोकविस्मयकारकम् ॥ १६ ॥

[ दशमं यन्त्रम् १० ]

दंष्ट्रा०–दंष्ट्राभिः करालाभिः [2]भीषणः–भीमः स चासौ । कुपितासुरश्च, निर्जलोऽपि मेघः स्यादतो विशेष्यते कुपितासुरजलदजलधराणां आ–समन्तात् पातास्तैः अभ्यस्ततपोऽनलेन हे जाज्वलन्त !–देदीप्यमान ! पार्श्वनाथ ! दह–भस्मीकुरु । दुष्टानां नागानां विषमिति । जाज्वलन्तेति छन्दोभङ्गभयात् कृतम् । अस्यां जिननाम्नैव यन्त्रं सूचयति । जाज्वलन्तं जिनमेवामन्त्रयति—

काउं पोमं विसालं चउदलकलियं पासनाहस्स नामं
मज्झे पासेसु तत्तो सकलकल्लाणयं तपि विज्जादिगूढं ।

१ "धूताग्निकपिधन्नमपात्" ग–घ । २ "भीषणश्चासौ" क–ख ।

कमलदलस्थितदिक्पतिमध्ये भुजगावृतं जिनं नत्वा ।
षोडशदेवी[1] सहितं बीजाक्षरसंयुतं तद्धि ॥ १८ ॥
वन्ध्यानां सुतजननं म्रियमाणापत्यरक्षणं परमम् ।
पद्ममिदं रोगहरं ग्रहशाकिनिभूतनिर्नाशम् ॥ १९ ॥

वृत्तिः ।

पूआपुव्वं[2] जिणाणं फलयति लिहियं कुंकुमाईहि लोए
नासेई ईइदोसं [3]अकमवरिसणं सीयवन्हीण दाहं ॥

[ एकादशं यन्त्रम् ११ ]

ॐ नमो भगवते श्रीपार्श्वनाथाय ज्वल ज्वल प्रज्वल प्रज्वल हूं हूं महाग्नि स्तम्भय स्तम्भय हुं फट् स्वाहा । एकविंशतिवारान् जप्तं जलं अग्नि स्तम्भयति ।

ॐ नमो भगवओ पासनाहस्स थंभेउ सव्वाओ ईईओ जिणाण आणाए मा इह अहिद्दवंतु स्वाहा । अष्टोत्तरशतजापात् ईत्युपशमं करोति । दुष्टराजानं च पुष्पदानेन शमयति ॥ १७ ॥

कम०—अस्यामार्यायामशेषयन्त्रख्यापनायात्मनैव यन्त्रमुक्तम् । अष्टसु पद्मदलेषु दिक्पाला[4]भिधानानि । पद्ममध्ये भुजगावेष्टितं जिनमिति हुंकारम् । तस्योपरि ब्रह्माणमधस्तान्नागान् पूर्वोक्तान् भूयो भूयः षोडश पत्रेषु देव्यः ॐ चुरु चुरु बीजैः प्रथमार्योक्तैर्वेष्टयेत्, ततो भूयष्ठकारवेष्टितम् । किलि किलि कल कल बीजैर्वेष्टयेत् ततस्त्रिगुणमायया वेष्टयेदिति शेषः ॥१८॥

[ द्वादशं यन्त्रम् १२. ]

यन्त्रफलदर्शनायास्य फलं दर्शयति । वन्ध्यानां—

वन्ध्यानां पुत्रदम्, म्रियमाणापत्यानां प्रधानमपत्यरक्षणम् । एनं पद्म-कुवलयं रोगिणां रोगहरम्, बालानां ग्रहशाकिनीभूतोपद्रवनाशकमिदमिति ॥ १९ ॥

---

१ °देव्योपगतम्° ग-घ । २ °पूअं° ग । ३ ° सुकय° ख । ४ °दिक्पत्यभि° ख ।

दष्टकसर्वाङ्गगतं पद्ममिदं ध्यायतोऽमृतप्लवहम् ।
कुर्याद् विषापहारं प्रणवाद्यैः पञ्चभिर्वर्णैः ॥ २० ॥

वृत्तिः ।

भूयोऽपि फलमाह—

दष्टक०—दष्टकस्योपरि सर्वाङ्गगतं इदं पद्मं अमृतप्लवहं ध्यायतो-ध्यायमानस्य विषापहारं-विषक्षयं कुर्यात् । प्रणवाद्यैः-ॐकारपूर्वैः पञ्चभिर्वर्णैः-अक्षरैः । पञ्चेति सङ्ख्यां कुर्वन् पद्मनामचतुरक्षरं सूचयति-' तं च कुवलय ' मिति । अनेन व्यस्तसमस्तेनानेकधा कर्म कुर्यात् । कुवलयं वलयं कुवलयं, कुवलयमेव च वलयं च कुवलयवलयं यन्त्रं, तत्तु विचिन्तयेत् ॥

किं तद्वर्णचतुष्टयेन वनजं वर्णैस्त्रिभिर्भूषणं
आर्धेकेन मही [1]द्वयेन विहगो [2]मध्यद्वयं प्राणदम् ।
व्यस्ते गोमतुरङ्गचारि कुसुमं प्रान्ते च सम्प्रेषणं
ये जानन्ति विचक्षणा भुवि नरास्तेषामहं किङ्करः ॥
कृत्वा पूजां जिनेभ्यो दधिफलनिकरैर्धान्यपक्वान्नपूरैः
शुभ्रैर्वस्त्रैः सुपुष्पैरनुगतनिजभूश्चन्दनेनानुलिप्त्वा (सः) ।
दत्ताक्षः पद्मवर्णैः कुसुमशरशतैर्जापमेतद् विदध्या-
[3]न्मन्त्रः सिद्धस्ततोऽसौ विलसति भुवने पक्षिराजेव नागैः ॥

व्यस्तसमस्तं०--मन्त्रोपसंहारमतस्तत्त्वकथनात् करोति—व्यस्तक्रमेण पद्मभिर्वर्णैर्विरति पद्मनाम बहुधा-अनेकप्रकारैः परिकल्प्य जिनाभिधानाक्षरमहितैस्तैर्विपतिवर्णैः सर्वमपि पदं-मन्त्रबीजं तत् सर्वविषमथनम् ।
ह्रीँति दीर्घकलायुक्तं हरयान्तरितो दलेषु विन्यस्तं मध्येषु तत्समन्तात् ।
ॐ नमो भगवते पार्श्वनाथाय क्षि ह्रीँ पह्रीँ ॐ ह्रूँ स्वाहा ह्रीँ ह्रः
क्षपतासजापात् सिद्ध्यति । [ त्रयोदशं यन्त्रम् १३ ]

---

१ °पुनघ° क-ग्र । २ °मध्ये पक्षप्राणदम्° क-ख ।
[3] °मात: सिद्धि° ख ।

व्यस्तसमस्तं विपतिं वहुधा परिकल्प्य पञ्चभिर्वर्णैः ।
जिननामाक्षरसहितैः पदं पदं सर्वविषमथनम् ॥ २१ ॥

क्षिप ॐ स्वाहा पञ्चकमनिन्दितं पञ्चभूतपरिकल्पम् ।
नागाष्टककुलोपेतं सत्वरजस्तमःकलानुगतम् ॥ २२ ॥

वृत्तिः

कुङ्कुमगोरोचनया भूर्जदले जातिलेखिनीलिखितम् ।
धारयति यस्तु बाहौ स भवत्यपराजितो लोके ॥
शमनं विषदृष्टिकां (दष्टानां) यशः श्रीसौख्यदायकम् ।
धर्मार्थकाममोक्षाणां चैनं नित्यं समुद्वहेत ॥
एतत् परमसद्भावं एतत् तत्त्वं मनोरमम् ।
सारं तु सर्वशास्त्राणां सर्वकर्मसु योजयेत् ॥ २१ ॥

**क्षिप ॐ स्वाहा पञ्चक०—**

अस्यां तमेव विपतिं [१]सप्रपञ्चं कथयति—
'क्षिप ॐ स्वाहा' अयं अनिन्दितो विपतिः,
भूम्यादिभूतयुक्ताः सुरपतिजलवह्निवायुमण्डलगाः ।
अकवासतमकपाख्या नागा विप्रादयः क्रमशः ॥
[अजिताः] कृष्णा रक्ताः शुक्लाः (श्वेताः) ।
पीताः कुलिशाब्जस्वस्तिकध्वजैः कलिताः ॥
करशाखासु न्यस्ताः सत्वादित्रितययुक्ताः स्युः ॥
देव्यश्च जया विजया अजिता अपराजिताः स्थितास्ताः स्युः ।
एवं हि विपतिवर्णाः स्तोभस्तम्भादिकं कुर्युः ॥
करन्यासं पुराकृत्वा (पुरस्कृत्वा) स्वदेहविपतिं ततः ।
न्यसेत् पश्चाद्धि दष्टस्य ततः कर्म [२]समाचरेत् ॥ २२ ॥

१ °सपरिकरं° ग-घ । २ ° समारभेत्.° । ग-घ ।

रेफसम्पुटमध्यस्थः केकारो वन्हिमण्डले ।
आक्रान्तदीप्तवर्णाभिः स्तोभयेत् त्रिदशानपि ॥ २३ ॥

नीलोत्पलदलश्यामैः कैकारोपरि संस्थितः ।
यकारवेष्टितः शुद्धः पर्वतानपि चालयेत् ॥ २४ ॥

लसद्वज्रद्वयाक्रान्तमिन्द्रगोपुरमध्यगम् ।
पद्मकिञ्जल्कसङ्काशं स्तम्भयेत् त्रिपुरान्तकम् ॥ २५ ॥

वृत्तिः ।

तमेव स्तोभं दर्शयति— 'रेफसम्पुट०—

अग्निमण्डले एकारसंस्थाने स्वस्तिकविभूषिते स्वकीय ॐकारविपत्ति-युक्ते धकारो देवदत्तनामगर्भो रेफसम्पुटमध्यस्थः समन्ततोऽग्निबीजाक्रान्तः तद्वर्णैश्च त्रिदशानपि स्तोभयति–व्याकुलितचित्तान् करोति ॥ २३ ॥
[ चतुर्दशं यन्त्रम् १४ ]

नीलोत्पल०—नीलोत्पलदलश्यामो-धकारो वायुबीज-यकारस्तस्य उपरि स्थितः ठकाररूपवायव्यमण्डलस्थः शुद्धः-धवलः पर्वतानपि चालयेत् । अनन्तरोदित [5]वायव्यमण्डलस्य इति । किमुक्तं भवति? अग्निसन्तापदं दह्यमानधूमध्यामलितगात्रो नश्यति । [ पञ्चदशं यन्त्रम् १५ ]

अलाबुकफलके लिखितं यन्त्रमिदं काकपिच्छलेखिन्या ।
निजरक्तचिताङ्गारैस्तापितं नाशयेत् शत्रून् ॥ २४ ॥

अधुना स्तम्भमाह— लसद्वज्र०—

देवदत्ताभिधानं लसत् मध्यस्थं-वज्रद्वयेनाक्रान्तं स्वनाम्ना इन्द्रगोपुरस्य-माहेन्द्रमण्डलस्य च मध्यगं भूयस्तत्पद्मरूपं किञ्जल्कवत् पीतवर्णं त्रिपुरान्तकमपि-शङ्करमपि स्तम्भयति ॥ २५ ॥ [षोडशं यन्त्रम् १६]

१ °धकारो° ख । २ °म° ख । ३ °धकारं योपरि° ख । ४ °तकारावेष्टित° ख । ५ °जानय° ख ।

सुवर्णपक्षं वैनतेयं पक्षिराजं महाबलम् ।
नागान्तकं जितारिं च अजितं विश्वरूपिणम् ॥ ३१ ॥

विनतायाः सुतं दैत्यं विहङ्गं पन्नगोत्तमम् ।
गरुन्मन्तं खगेशं च तार्क्ष्यं काश्यपनन्दनम् ॥ ३२ ॥

द्वादशैतानि नामानि गरुडस्य महात्मनः ।
यः स्मरेत् प्रातरुत्थाय स्नातो वा यदि वाशुचिः ॥३३॥

विषं न क्रमते तस्य न च हिंसन्ति पन्नगाः ।
न दुष्टा द्रावयन्त्येनं सर्वकार्याणि साधयेत् ॥ ३४ ॥

एवंभूतैस्तु यो नामैः श्रीपार्श्वं स्मरयेज्जिनम् ।
तस्य रोगाः प्रणश्यन्ति विषं च प्रलयं व्रजेत् ॥ ३५ ॥

---

वृत्तिः ।

**तदभिधानान्याह—**

सुवर्णं वैनतेयं च तार्क्ष्यं काश्यपनन्दनम् ।
महाबलं जितारिं च अजितं विश्वरूपिणम् ॥ ३१ ॥

शोभनवर्णत्वात् सुवर्णम् । विनयेन नता विनता, तस्या अपत्यं वैनतेयम् । काश्यपगोत्रराज्ञः पुत्रम् । अमितबलत्वान्महाबलम्, शत्रुविनाशाज्जितारिम् । रिपूणामभावाद् अजितम् । सर्वगतत्वाद् विश्वरूपिणम् जिनगरुडं भो लोका ! विषघ्नं स्मरत इति ।

फलं दर्शयति-एवंभूतैरन्यैरपि नामभिर्यः पुरुषः श्रीपार्श्वजिनं स्मरयेत् –चिन्तयेत् तस्य पुरुषस्य रोगाः–ज्वरादयः प्रणश्यन्ति–दूरमपसरन्ति, विषं तु–पुनः प्रलयं व्रजेत्–गच्छेत् ॥ ३५ ॥

ग्रहदुःस्थसुस्थजननं सर्वविषोच्छेदनं प्रशान्तिकरम् ।
प्रध्वस्तदुरितनिचयं पार्श्वं योगीश्वरं वन्दे ॥ ३६ ॥
इति मालामन्त्रपदैरभिष्टुतं यः स्मरेत् त्रिसन्ध्यमपि ।
स करोति नागक्रीडां शिव इव विषवेदनातीतः ॥ ३७ ॥
भक्तिर्जिनेश्वरे यस्य गन्धमाल्यानुलेपनैः ।
सम्पूजयति यश्चैनं तस्यैतत् सफलं भवेत् ॥ ३८ ॥

इति श्रीपार्श्वनाथस्तोत्रम् । लि० राजविजयसूरिशिष्य...विजयेन स्वपठनार्थम् । शुभं भवतु ॥

---

वृत्तिः ।

स्तवोपसंहारमाह—

ग्रहदुःस्थ०—　　अन्त्यमङ्गलमेतत् ।

पार्श्वनाम्ना तीर्थकरम् । योगो-ध्यानाभ्यासो विद्यते येषां ते योगिनः-साधवस्तेषामीशः-स्वामी तमहं वन्दे। कथम्भूतम् ? ग्रहैः दुःस्थं-ग्रहदु स्थ ग्रहकृता या पीडा तदपनोदनेन सुस्थजननम् । स्थावरजङ्गमविषस्य च्छेदनं-विनाशनम् । प्रकर्षेण शान्तिकरं इत्यर्थः । ध्वस्तदुरितसङ्घातं पार्श्वं वन्दे । इति ॥३६॥

तत्प्रणामादैहिकं फलं भूयो दर्शयति—

इति मालामन्त्रपदः०—

इति—अनेन प्रकारेण मालामन्त्रपदैः मालारूपतया व्यवस्थितमन्त्रबीजैरामिमुख्येन स्तुतं पार्श्वजिनं यः पुरुषः स्मरयेत्-ध्यायेत् त्रिसन्ध्यम् । अपि-शब्दात् भक्त्या स एवम्भूतो नागक्रीडां करोति । शिव इव-महादेव इव विषवेदनोज्झितः इति ।

शिवनागयोः संशब्दनादात्माभिधानं कर्ता सूचयति ॥३७॥

भक्तिरित्यादि-यस्य जिनेश्वरे-पार्श्वनाथे भक्तिरस्ति, यत्रगन्धमाल्यनुलेपनद्रव्यतः सम्—एकीभावेन पूजयति भावपुष्पैरेनं पार्श्वजिनं तस्यैतन्मन्त्रस्तवनं सफलं-सार्थकं भवेत्-भवतीति ॥ ३८ ॥

इति पार्श्वजिनस्तवनटीका ।

लिखिता सं. १५२३ वर्षे वैशाख शुदि २ दिने पं० हंसहर्षगणि-शिष्येण गन्धारम(ब)न्दिरे ॥

श्रीधरणोरगेन्द्रस्तवनटीका समाप्तेति ॥

[ १४ ]

श्रीअजितसिंहाचार्यविरचितं

'अट्टे मट्टे' मन्त्रगर्भितम्

## श्रीपार्श्वनाथस्तोत्रम् ।

ॐ नमो भगवते श्रीपार्श्वनाथाय ह्रीँ प्रगे ।
धरणेन्द्रपद्मावतीसहिताय सदा श्रिये ॥ १ ॥
अट्टे मट्टे तथा क्षुद्रविघट्टे क्षुद्रमेव हि ।
स्तम्भय स्तम्भय क्षुद्रान् स्वाहान्तैरेभिरक्षरैः ॥ २ ॥
पद्ममष्टदलोपेतं मायाङ्कं जिनलाञ्छितम् ।
पद्ममध्यान्तरालेषु पत्रोपरि यथाक्रमम् ॥ ३ ॥
अष्टौ अष्टौ तथैवाष्टौ विन्यस्याक्षरमण्डलम् ।
तत्राष्टशतजापेन ज्वरमेकान्तरादिकम् ॥ ४ ॥
रिपुचौरमहीपालशाकिनीभूतसम्भवाम् ।
अरण्यदेहिजां भीतिं हन्ति बद्धं भुजादिषु ॥ ५ ॥
पुष्पमालां जपित्वा च मन्त्रेणाष्टशताधिकम् ।
प्रक्षिप्ता पात्रकण्ठेषु भूतादीन् स्तम्भयेद् ध्रुवम् ॥६॥
गुग्गुलस्य गुटीनां च शतमष्टोत्तरं हुतम् ।
दुष्टमुच्चाटयेत सद्यः शान्तिं च कुरुते गृहे ॥ ७ ॥
देवस्याजितसिंहस्य नीलवर्णस्य संस्तवात् ।
लभन्ते श्रेयसीं सिद्धिं कवयो वाञ्छितैः सह ॥ ८

श्रीअश्वसेनकुलपङ्कजभास्करस्य
पद्मावतीधरणराजनिषेवितस्य ।
वामाङ्गजस्य पदसंस्तवनाल्लभन्ते
भव्याः श्रियं सुभगतामपि वाञ्छितानि ॥ ९ ॥

[ १५ ]

श्रीसङ्घविजयगणिप्रणीतं

## श्रीपार्श्वसप्ततीर्थीस्तवनम् ।

१ ॐ नत्वा जिनमण्डलीसुरगवीमिष्टार्थसम्पादनीं
स्मृत्वा सद्वरदायिनीं भगवतीं श्रीसारदां सारदाम् ॥
ऐँ क्लीँ मन्त्रपदैर्मुदा मुनिजनध्येयां नमद्दैवतां
झ्रौँ स्वाहाक्षरसंयुतैः सुखकरीं श्रीसप्ततीर्थीं स्तुवे ॥ १ ॥
जयति नमदनेकाखण्डलश्रेणिमौलि–
प्रकटमणिमयूखोद्योतिपादारविन्दः ।
भुवनविदितनामा ध्येय 'शङ्खेश्वरो'ऽयं
दुरितहरणपार्श्वः पार्श्वनाथः प्रसिद्धः ॥ २ ॥
वन्दे श्रीअणहिल्लपत्तनपुरालङ्कारहारोपमं
श्रीपञ्चासरपार्श्वनाथमनघं प्रौढप्रभावास्पदम् ।
ॐ ह्रीँ श्रीँ धरणेन्द्रसेवितपदं विश्वत्रयीमण्डनं
विघ्नव्राततमःप्रसारमथने पाथोजिनीवल्लभम् ॥ ३ ॥

न रोगो न च सम्मोहो न शोको न च साध्वसम् ।
न दुःखं न च दारिद्र्यमलं स्थातुं नते त्वयि ॥ ३ ॥
तव प्रभावतः स्वामिन् ! कलिकालो विनश्वरः ।
जज्ञे कृतयुगाश्लेष इव लोकोऽपि वैभवात् ॥ ४ ॥
जय श्रीस्तम्भनाधीश ! श्रीपार्श्व ! पुरुषोत्तम ! ।
चूरयन्नघसङ्घातं पूरयन् नरवाञ्छितम् ॥ ५ ॥

---

[ १७ ]

श्रृङ्खलालङ्कारमयं

## श्रीस्तम्भनपार्श्वजिनस्तवनम् ।

---

स्तवीमि तं पार्श्वजिनं सदैव तं वतंसकं स्तम्भनपत्तनावनेः ।
वनेचरा मत्तमतङ्गजादयो दयोदधिं नाभिभवन्ति यं श्रितान् ॥ १ ॥
श्रितामराधीशमधीशमागता गता महासङ्गरगोचरं नराः ।
न राजिभिर्जेयवपुःपराक्रमाः क्रमानमन्मल्लमतल्लिकाङ्क्तिकराः ॥ २ ॥
करा न किं राजभरस्य दुःखदाः खदारण ! त्वां यतां शमाश्रयम् ।
श्रयन्ति सिंहेन किमङ्कितं वनं वनन्त उच्चैर्मृगधूर्तसञ्चयाः ॥ ३ ॥
चयाय लक्ष्मीर्यतते प्रमेदुरा दुरायतिर्नश्यति तस्य सुप्रिया ।
प्रिया च पुत्राः सुजनाः स्युराश्रवाः श्रवाय यः पार्श्वगिरः प्रमोदवान् ॥४
दवानलः शाम्यति वारिधिर्धरा धराधरो मन्दिरमिन्दिराकुलम् ।
कुलं पिशाचादि कुलन्तमर्हतोऽर्हतो नमस्यां जगतोऽपि यः स्मरेत् ॥५॥

स्मेरशुलक्ष्म न तवेश ! मानसं न सङ्गतं मानमहीभृताऽनिभम् ।
निभं त्यजंल्लोभपयोधिरोधनं धनञ्जयं क्रोधरिपुं जयन्नुमः ॥ ६ ॥
नु महामेनं जगतामधीश्वरं स्वरं स्तुवन्तं ससितं सुधारसम् ।
रसं त्रिलोकाद्भुतमंगमिश्रितं श्रितं न कैः कैः प्रवदन्ति कोविदाः॥७॥
विदालोकैर्लोकप्रकटनपटुः स्तम्भनपतिः
पतित्वादावङ्घ्र्योर्विनुत इति भावेन भगवान् ।
॥ भव्यश्रोत्राण्यवटकुहराणीक्षुशिरया
रयात् प्रीणन् मह्यं तरुणकरुणं रातु चरणम् ॥ ८ ॥

---

[ १८ ]

## श्रीदेवसुन्दरसूरिप्रणीतं

# श्रीपार्श्वनाथस्तवनम् ।

---

स्फुरत्केवलज्ञानचारुप्रकारं फणामण्डपाडम्बरोद्द्योतिताशम् ।
महाकर्मपङ्कौघनाशे दिनेशं स्तुवे स्तम्भनाधीशपार्श्वं जिनेशम् ॥ १ ॥
प्रभो ! सद्गुणश्रेणिलक्ष्मीनिवासं भवन्तं प्रदत्तान्तरारिप्रवासम् ।
जगद्वन्द्य ! पादाम्बुजं कोऽस्तहासं जनः स्तोतुमीष्टे लसद्देवदासम् ॥२॥
महानन्दलक्ष्मीविलासैकगेहं तथापि प्रभो ! किञ्चन त्वां स्तुवेऽहम् ।
महामकिरागैरितो नीलदेहं जिनाज्ञोऽपि भव्यावलीपूरितेहम् ॥ ३ ॥
जय त्वं प्रभो ! प्राप्तसंसारतीर ! स्फुरत्पापधूलीप्रणाशे समीर ! ।
महामानमायावनीसारसीर ! ज्वलत्क्रोधदावानले मेघनीर ! ॥ ४ ॥

तथाभव्यतादित्यकान्तिप्रयोगप्रबुद्धेषु त्रिध्वस्तरागादिरोग ! ।
सतां मानसाब्जेषु खेलन् सहेलं प्रभो ! भृङ्गसि श्यामलाङ्गोऽनुवेलम् ॥
त्वदीयोरुमाहात्म्यसन्नाममन्त्रस्मृतेरस्यनन्तात्मुतज्ञानसत्र ! ।
करिव्याघ्रसिंहोरगारातिभूतादिभीतिः क्षणात् क्षीयतेऽतिप्रभूता ॥१७॥
भवापारवारां निधौ विश्वनेतर्महादुःखनीरेऽन्तरङ्गारिजैतः ! ।
नृणां मज्जतां तारणायोरुकाष्ठं तरण्डायते शासनं ते गरिष्ठम् ॥१८॥
चरीकर्ति तेऽर्चां जनो यो वरिष्ठां बरीभर्ति भक्तिं च चित्ते पटिष्ठाम् ।
नरीनर्ति कीर्तिर्जिने तस्य कार्यं सरीसर्ति चाचिन्तितं सर्वमार्यम् ॥
प्रसर्पत्प्रभावस्य तेऽल्पस्वभावा विभो ! नैव साम्यं श्रयन्तेऽन्यदेवाः ।
प्रभाभ्राजमानस्य भानोः किमेता लभन्ते तुलां तारका अप्यनन्ताः ? ॥
स्वचित्तालवालप्ररूढा वरेण्यक्रियातोयपूरेण सिक्ता शरण्य ! ।
तवाज्ञामहाकल्पवल्ली जनानां फलं पम्फलीतीप्सितैः सज्जनानाम् ॥२१॥
सदाचीचरद् देवराजैः स्वदास्यं तथाचीकरयो महेशेन लास्यम् ।
जनेऽजीवृतत् त्वामिहाज्ञां च कामं त्वमर्हन्नजैषीस्तमप्याशु काम् ॥२२॥
विभो ! कल्पवृक्षोऽस्यभीष्टार्थदाने सुधाम्भोदसि क्षेमवल्लीविताने ।
दिनेशायसे भव्यराजीवचक्रे....................................॥ २३ ॥
अदीपिष्ट भूयो भवानीश ! विश्वं स्वतोऽबोधि सज्ज्ञानयोगेन विश्वम् ।
अपूरिष्ट कीर्त्या समस्तं त्रिलोकं तथाऽतायि सूक्ष्मेतरं जीवलोकम्॥२४॥

श्रीस्तम्भनाभरण ! पार्श्व ! भवन्तमेवं
प्रातः स्तुते प्रतिदिनं घनवासनो यः ।
तस्याः श्रयन्ति भगवन् ! मनुजाधिराज-
श्रीदेवसुन्दररमाशिवसम्पदस्तम् ॥ २५ ॥

[ ६९ ]

श्रीजिनसोमसूरिपादैः प्रणीतं

## श्रीस्तम्भनकपार्श्वजिनस्तवनम् ।

श्रीस्तम्भनं पार्श्वजिनं निरञ्जनं स्तुमः समग्रातिशयाश्रयं वयम् ।
फणीश्वरस्फारफणागणोल्लसन्मणिप्रभाडम्बरमण्डिताम्बरम् ॥ १ ॥
स्तुत्यस्त्वमर्च्यस्त्वमसि प्रणम्यस्त्राता त्वमेव त्वमुपासनीयः ।
त्वत्तः प्रभुः स्तम्भनपार्श्व ! विश्वे न कश्चिदन्यः श्रितवत्सलोऽत्र ॥२॥
कृतानि तीर्थानि सुराः श्रिताश्च यन्त्राणि तन्त्राण्यपि सूत्रितानि ।
स्मृताश्च मन्त्रा न हि तैरसाधि फलं जिन ! त्वच्चरणप्रसत्तेः ॥३॥
अथ प्रभो ! जाग्रदभङ्गभाग्ययोगेन केनापि तवाङ्घ्रिसेवा ।
लेभे मया तेन कृपालुमौलेर्मन्ये मनःकामितमद्य जातम् ॥ ४ ॥
हित्वा वपुःपञ्चकमङ्गिनस्त्वद्ध्यानादनङ्गत्वमथुः शिवाप्ताः ।
चित्रं प्रसादात् तव चङ्गमङ्गं लब्ध्वाऽधुनाऽत्र स्मररूपिणः स्युः ॥५॥
ददे मुनीन्द्राभयदेवसूरेर्वपुस्त्वया दिव्यमपास्य कुष्ठम् ।
कृपां कुरु क्षिप्रमपाकुरुष्व दुष्कर्मरोगं मम सुप्रसन्नः ॥ ६ ॥
कर्मव्यथाभिर्विधुरं वराकं त्वदेकभक्तं शरणागतं माम् ।
उपेक्ष्यमाणस्य जगत्प्रभो ! ते कृपा कृपालोर्न हि किं भवित्री ? ॥७॥
असह्यबाह्यान्तरोगहन्ता त्वमेव विश्वेऽस्यनवद्यवैद्यः ।
जगत्प्रभो ! ते शरणागतस्य प्रसद्य मे रोगहरो भव त्वम् ॥ ८ ॥

न मत्समः कोऽपि परोऽस्ति दुःखी न दुःखहन्ता तु जिन ! त्वदन्यः ।
मया त्वदङ्के निहितं शिरस्तत् तवोचितं यत् कुरु तन्ममाशु ॥९॥
त्वमेव तीर्थं मम देवता त्वं प्राणास्त्वमात्मापि मम त्वमेव ।
पुनः पुनर्विज्ञपयामि नाथ ! नीरोगतां यच्छ जगच्छरण्य ! ॥१०॥

इति स्तुतिः स्तम्भनपार्श्व ! नेत-
श्चेतस्विचेतोऽर्थितदानदक्ष ! ।
श्रीस्तम्भतीर्थाभरण ! प्रसद्य
भक्तस्य मे पूरय पूर्णाशाम् ॥ ११ ॥

---

[ २० ]

## श्रीजयसागरविरचितं

यमकमयं

# श्रीपार्श्वजिनस्तवनम् ।

---

योगात्मनां यो मधुरं धुरन्धुरं भिन्दानमेनः सकलं कलङ्कवत्
वामेयमाहुस्सदयो दयोदयो मुदे स मेऽदक्षमहागदामहा ॥

---

## स्वोपज्ञावचूरिः ।

---

नमो जिनाय ।

कान्तह्री स्तवनमिदं व्याख्यायते—

योगो—ज्ञानदर्शनचारित्रमयः तत्प्रधान आत्मा येषां ते योगात्मानः—योगात्मनश्चेतसिनः तेषां मध्ये 'मधुरं' मनोज्ञम् । 'धुरन्धुरं' धुरन्धरम्, इत्य

अहो तवास्था चरणे रणेरणे यदद्भुताकारधरा धराधरा ।
सुराङ्गना स्वान्तमनामनामनानयद् विकारं न विभा विभा विभा ।

अवचूरिः ।

'भिन्दानं' दूरीकुर्वाणम् । किं तत्? 'एनः' पापम् । कीदृशम्? 'सकलं' निरवशेषम् । कलङ्कान्–असद्भूतदोषारोपान् लाति–गृह्णातीति 'कलङ्कलम्'। एवंविधं 'वामेयं' वामासुतम् श्रीपार्श्वजिनं 'आहुः' कथयन्ति कवयः । सन्–शोभनः शुभभाग्यं यस्य स 'सदयः' ( तथा दयया–कृपया उदयं–वृद्धिं याति 'सदयोदयः,' अथवा दयाया उद्भवो यस्मात् 'सदयोदयः' । तथा **अदभ्र इत्यादि** । अदभ्रं–सर्वातिशयाद् बहुलं महः–शरीरद्युतिर्देवादिकृत-उत्सवो वा यस्य स 'अदभ्रमहाः', महन्तश्च ते आमाश्च–रोगाश्च तान् हन्तीति 'महामहा' । एवंभूतः स वामेयो 'मे' मम 'मुदे' हर्षाय भवत्विति क्रिया

'**अहो०** ! अहो इत्याश्चर्ये, तव–भवतः आस्था–दृढिमा चरणे-चारित्रे च रणो–भावरणः संसारः तस्य ईरणं–क्षेपणं यस्मात् तद् रणेरणं तत्र रणेरणे । यद्–यस्माद् अद्भुताकारधरा–हृदयाक्षेपकरूपधारिणी धरां–पृथिवीं अधरयति सौन्दर्यादिगुणैः, प्रोच्चैः स्वर्गवासादिना व अधःकरोति या सा धराधरा । सुराङ्गना–देवनारी तासां स्वान्तं–मन अनाम! नामेति, न विद्यन्ते अमाः–रोगा यस्य स अनामः, नामेति कोम लामन्त्रणे । ततो हे अनाम ! नानयत्–न प्रापयति स्म । विकारं–वि-पर्यासभावम् । नवभेत्यादि०, भावाः परमनोमोहोपजनकाः प्रतीताः. भा–देहद्युतिः, भावाश्च भाव भावभा च न वाश्च ता भावभाश्च नः भावभा । एषा पदघटना । पदार्थस्त्वेवम्—

हे नाथ ! चरणे रणेरणे अहो तवास्था यदद्भुताकारधरा धराध नवभावभा ईदृशा सुराङ्गना । हे अनाम ! तव स्वान्तं मनः न म विकारं तन्न नयदहो चारित्रे दृढत्वं महदिति भावः ॥२॥

विभो ! तवासेवनयाऽनयाऽनया निवारिता वाच्यमया मया भयाः ।
अतः प्रसादाद् भवतोऽवतो वतोत्तीर्णोऽस्मि दुःखात् परमारसारमा ॥
यन्मौलिदेशे त्वमदा मदामदा वाञ्छार्थसम्पत्तिकरं करं करम् ।
न तन्मनोऽरंस्त हरौ हरौ हरौ मायामये नापि भवे भवे भवे ॥४॥

अवचूरिः ।

'विभो०'

हे विभो ! तव आसेवनया-पर्युपास्त्या, अनया-अधुनैव क्रियमाणया अनयाः-उन्मार्गमया निवारिताः किम्भूता या (?) अनेया ? इत्यत आह-वाच्येत्यादि०, वाच्यमयाः-अवर्णवादमयाः कायवाङ्मनसोद्वेजकाः सङ्क्लेशरूपा येभ्यस्ते वाच्यमयाः । मया भयाः-करभाः इति यत एवं अतः कारणात् भवतः-तव, अवतः-जगद् रक्षतः, प्रसादाद् वत इति विस्मये । दुःखात् उत्तीर्णोऽस्मि इत्यर्थः ।

अन्यथा(द्वा?) परमेत्यादि०, परमा-प्रकृष्टा रमा-श्रीः, मा-इति माम् आर-प्राप, लक्ष्मीं च प्राप्तोऽहमित्यर्थः । अाम 'अमादेश' ( ) इतिसूत्रेण अमा सह युष्मदः स्थाने मा इत्यादेश इति ॥३॥

यन्मौलि०

हे देव ! यन्मौलिदेशे—यस्य मस्तकोपरि इत्यर्थः । त्वं अदाः-दत्तवान् । कीदृशमदा-जाड्यादयः, आमाः-रोगाः, मदाश्च अमाश्च मदामास्तान् द्यति-छिनत्ति यः मदामदाः, किं त्वं दत्तवान् ? करं-दक्षिणहस्तम् । कीदृशम् ? वाञ्छार्थसम्पत्तिकरम् समस्तवाञ्छितसिद्धिविधायकम् । तथा कं-सुखं रातीति करं सुखदम् । कस्येदं विशेषणद्वयम् ? । यन्मस्तके त्वं तुष्टो दत्तवान् तस्य किं जातमित्याह-न तन्मनो इत्यादिः तस्य न मनोऽरंस्त-न रमते स्म । केष्वित्याह-हरौ-नारायणे, हरौ-इन्द्रे, हरौ-सूर्ये, तथा नापि भवे-ईश्वरे मयामये-मुधादेवत्वाभिमानभाजि इत्यर्थः । एतद् विशेषणं सर्वत्र हर्यादिषु सम्बन्धनीयम् । भवे भवे प्रत्येक जन्मनोति । अयमिह भावः-यन्मौलौ त्वं करं दत्तवान् तस्य मनो नान्यस्मिन् लौकिकदेवादौ रमते, नहि कश्चित् प्राप्तपर्याप्तपरमान्नभोजनः कथं(?) कुशकवलमभिपततीत्यर्थः॥४॥

दिष्ट्या स्तम्भनकेश ! पार्श्व ! भगवन् ! नानागुणग्रामणी-
रेषा श्रीजयसागरेण रचिता स्वल्पाक्षरापि स्तुतिः ।
तर्कव्याकरणादिशास्त्रविदुषां यायादुपादेयतां
सौवर्णाभरणं सुरत्नखचितं यद्वा न कस्य प्रियम् ?॥ ५॥

अवचूरिः ।

'दिष्टया स्तम्भनकेश !' इत्यादि, अत्र दिष्टया-हर्षेण नानागुण-ग्रामणीः इति कर्तुर्वक्तुर्वा अनेकसम्यक्शुद्धयादिना गुणसमूहप्राप्तिकारिणीति स्तुतेर्विशेषणम् । शेषं पूर्वार्द्धं सुगमम् । अथ आशीर्वचनद्वारेण स्तुतेर्माह्य-तामाह-तर्केत्यादि०, तर्कव्याकरणादिशास्त्रे विद्वांसस्तेषामेव एषा स्तुतिर्मत्कृता उपादेयतां-ग्राह्यतां यायात्-गच्छतु, न मूर्खाणाम् । यतः—

मूढाः कदाग्रहग्रस्ता न सूक्तं बहुमन्वते ।
काकानां केवलं विष्ठा मिष्टा भाति न शर्करा ॥

अमुमेवार्थं दृष्टान्तेन दृढयति । यद्वा-अथवा सौवर्णाभरणं-सुवर्ण-मयालङ्कारः अन्यच्च सुरत्नखचितं-जात्युज्ज्वलमाणिक्यसंबद्धं कस्य सचेतसः प्रियं-ग्राह्यतयाऽभीष्टं न भवति ? । अपि तु सर्वस्यापि तत् प्रियमेव भवतीति ॥५॥

॥ इति 'योगात्मना' यमकबन्धश्रीपार्श्वनाथस्तवावचूरिः समाप्ता ॥

[ २१ ]

श्रीरत्नशेखरसूरिशिष्यकृतं

महीशानापुरालङ्कार

## श्रीपार्श्वजिनस्तवनम्।

---

श्रीमान् पार्श्वः प्रभुरभिमतं भावभर्तुर्बिभर्तु
स्मर्तुः पुंसः पुरवरमहीशानकोर्वीवतंसः ।
रात्नं भास्वत्तिलकमलके भाति यस्य स्मरारे
स्तार्तीयीकं नयनमनिभं चित्रभान्वात्मकं तु ॥ १ ॥
श्रीवामाभूर्भवतु भवतुद् दृग्द्वयीपुण्डूदम्भात्
साक्षात्कृत्यादढयदिति यः सत्सुरत्नव्यवस्थाम् ।
स्थित्या तुल्येऽकलयत किल ज्ञानशीले फलादौ
ताभ्यामत्राभ्यधिकमहिमामर्शनं दर्शनं तु ॥ २ ॥
विश्वाधीशः शमयतु सतामश्वसेनाङ्गजन्मा
जन्मावर्त्ताः प्रतिकृतिगतैर्नेत्रयुग्मोद्य(च्च)पुण्ड्रैः ।
तुल्यावस्थौ विभवमदनौ ज्ञापयन् कार्यरूपौ
धर्मं मोक्षं न्यगददनयोः कारणं यस्त्रिवर्गे ॥ ३ ॥
सत्वानां स्यात् सुहृदसुहृदोस्तुल्यवृत्तिर्यदासौ
बुद्धिः शुद्धा सपदि घटते केवलश्रीस्तदैव ।
सन्त्यान्यास्णोरिव समभृता पुण्ड्रभङ्ग्या ममास्ये
मूर्तिर्यस्य ध्रुवमिति वदत्यस्तु पार्श्वः श्रियेऽसौ ॥४॥

पार्श्वः सोऽर्हन् सुरपरिवृढाभ्यर्हणीयाङ्घ्रिपद्मः
पद्माभोगं घटयतु गतच्छद्मसेवोद्यतानाम् ।
रत्नोद्भूता तिलककलिता यस्य भालाग्रभागे
भाति प्रौढोदयगिरिस्यंशुमन्मण्डलीव ॥ ५ ॥

ईदृग् नान्यत् पदमुदयकृद् विद्यतेऽस्माकमुच्चै-
स्त्रैधेऽप्यस्मिन् जगति बत सञ्चिन्त्यमानं किमेवम् ।
ध्यात्वा लोकत्रितयकमलाः संश्रियुर्यन्मुखाब्जं
दृग्द्वन्द्वोद्यत्तिलकतनवः पार्श्वदेवः स जीयात् ॥ ६ ॥

बिभ्रद् गर्भात् प्रभृति विमलज्ञानऋद्धीः समिद्धा-
स्तिस्रोऽजस्रं प्रभुरतिशयी कृत्स्ननृभ्यस्तदाभूत् ।
इत्यैतिह्यं स्मरति मतिमान् प्रेक्ष्य यस्याक्षिपुण्ड्रान्
सार्वः पार्श्वः स भवतु भवक्ष्मारुहे पार्श्ववन्मे ॥७॥

त्रय्यास्तेजश्चयशुचिवपुर्मार्गगैर्मार्ग्यमाणः
क्षिप्तोत्सर्पन्निविडजडिमादृक्प्रपञ्चैकबीजम् ।
ईदृक्षोऽपि श्रयति न तुलां पङ्कजन्मार्द्धिकृत्वा-
यद्वक्त्रे गाम्बरमगिरसौ मां पृणात्वेष पार्श्वः ॥ ८ ॥

सप्तस्फूर्जत्फणमणिलसल्लोचनोद्यल्ललाम-
व्याजात् प्रामृत्यकृत किमिह स्वस्वमेकैकरत्नम् ।
दिक्पालौघो दशहरिदधीशस्य यस्य प्रसत्त्यै
शैवं शर्म प्रदिशतु सतामाश्वसेनिर्जिनोऽसौ ॥ ९ ॥

श्रीवामेयः प्रथयतु ममामेयमाहात्म्यगेयः-
प्रेयः श्रेयस्तिलकनयनाबत्फणारत्नदम्भात् ।
धत्ते दातुं दश सुरमणीन् भास्वरांस्तुल्यकालं,
चेतोऽभीष्टान्यधिदशहरित्तस्थुषां नेमुषां यः ॥ १० ॥

पोपोषीति स्वयमविरतं पोषयेच्चापरैर्नैः
स्वामी विश्वेऽप्ययमिति मुदा किन्त्वमान्तो यदङ्के ।
एतेऽभूवन् बहिरनिभृताः साधुधर्मप्रकाराः
प्रेह्वत्पुण्ड्रेक्षणफणमणिव्याजतः पातु सोऽर्हन् ॥११॥

अष्टानां यः शुभमृगदृशांकेलये सिद्धिनाम्नां
धत्ते रत्नान् प्रवरमुकुरान् स्वेन पाणौ कृतानाम् ।
प्रोद्यत्पुण्ड्रस्फुटमणितनून्नूनमन्यूनऋद्ध्यै
भूयाद् भूयोऽतिशयभवनं वः स वामाङ्गजोऽर्हन्॥१२॥

एकाप्योऽष्टौ प्रवचनमताः पालयेद् यः किलाम्बाः ।
स स्यान्महत् परमपदसम्प्राप्तिमात्रं किमेतत् ।
ज्ञीप्सुर्यस्ताः स्वशिरसि सतां दर्शयेद् यः स्फुटास्ताः
प्रोद्यत्पुण्ड्रस्फुटमणिनिभाद् भूतय स्तात् स पार्श्वः ॥१३॥

त्रैलोक्येऽप्यद् भुतगुणवरं प्राप्य वेगाद् वरीतुं
प्रीत्योपेता किलनवनिधिश्रीवधूर्धूतभेदम् ।
सम्यक् सम्भावयितुममवत् सङ्गमाद् योऽपि तावत्-
मूर्तिः पुण्ड्रस्फुटमणिगणे स श्रिये चोऽस्तु पार्श्वः ॥१४॥

शङ्के काष्ठाष्टकगततृणां मुक्तिमार्गप्रचारे
दृग्व्यालोऽपि प्रचलतमसश्छित्तये व्यक्तशाकोन् ।

अष्टौ पुण्ड्रस्फुटमणिनिभाद् यो बिभर्ति प्रदीपान्
स श्रीवामात्मजजिनपतिः पातु नः पङ्कपातात् ॥१५॥

अङ्गान्यष्टौ न जहति हिताभोगयोगस्य येना-
कालैकात्म्यार्जितदृढसुहृत्त्वानि मुक्तेऽपि यस्मिन् ।
अत्रस्थां यत्प्रतिकृतिमपि प्रेमनिर्बन्धतः किं
पुण्ड्रप्रेङ्खत्फणमणिमिषात् सैष देवो मुदे वः ॥ १६ ॥

शास्त्रेऽस्माकं मुनिभिरवमं द्रव्यतो मङ्गलत्वं
ख्यातं तन्नः प्रवितर शुभं भावतस्तत् स्वसंस्थम् ।
विज्ञप्त्यै यं किमिति समुपेतानि सान्द्राणि भद्रा-
ण्यष्टौ पुण्ड्रस्फुटमणिनिभाद् भद्रकृत् सोऽस्तु पार्श्वः ॥१७॥

नन्द्याद् विद्याधरनरसुरारब्धपादाब्जसेवः
पार्श्वो देवः फणमणिलसत्पुण्ड्रसङ्क्रान्तियोगात् ।
दध्रे मूर्तीनिव हितमनाः किं नु सत्वादितत्त्वा-
न्याख्यातुं यः कृतिजनततेर्विस्तरेणैककालम् ॥ १८ ॥

स्थास्नुर्यस्य प्रकटमहिमान्यानने काननेऽस्मिन्
श्रीमान् शान्तः प्रविदितरसाधीशिताऽसाधयन्नु ।
लक्ष्यं पुण्ड्रच्छलमसिवरं सूर्यहासं द्विभेद-
द्वेषिश्रेणीमदभिदमसौ पार्श्वदेवो मुदे वः ॥ १९ ॥

प्रापत् कोटिं लवणिमरमा यस्य सद्देहगेहे
तेनासौ किं कनति निहितो रत्नपुण्ड्रच्छलेन ।
शृङ्गे तस्य प्रसृमररुचोश्चोनचोरध्वजः श्री-
पार्श्वः शश्वत् स भवतु भवभ्रान्तिभिद् भावभाजाम् ॥२०॥

कुर्याद् भूयोंश्चरणरयघूर्णोणे चारणेन्द्र-
· श्रेणिद्राक्च्छविरविरतं पार्श्वविश्वेश्वरो वः ।
भाले यस्य स्फुरति तिलकं कम्रकालेयकान्ति
प्राणत्राणां भुवि शिवपुरप्रापकः किं नु दण्डः ? ॥ २१ ॥
तन्याद् धन्यात्मकजनततौ नस्ततौजः प्रतिष्ठां
श्रीवामासूस्तिलकमलकालङ्कृतिर्भाति यस्य ।
मन्ये न्यञ्चत्कुगतिनगरद्वारसंरोधकारी
भक्तानामप्रतिघपरिघः सज्जवज्रात्मकोऽसौ ॥ २२ ॥
वक्त्राम्भोजेऽभिमुखमभितो बिम्बमृद्धिः फणोद्यद्-
रत्नैस्तारावलयमभवत् तस्य मध्ये दधौ च ।
सद्दृग्दृश्यं ध्रुववररमां यस्य दीव्यल्ललाम-
स्थाम स्थेयः स दिशतु जिनः कर्मवैरिच्छिदे नः ॥२३॥
देयाद् गेयानणुगुणरमां पार्श्वनामा ममार्ह-
न्नैतद्भालं तिलकमनिभं यस्य बाभाति भाले ।
किन्त्वाक्रान्तं प्रकटमहिमामत्रमन्त्रप्रयोगै-
र्गोशीर्षोत्थं भुवनसुदृशां वश्यकृद् विष्वगेतत् ॥ २४ ॥
एवं श्रीगुरुरत्नशेखरतुलस्फूर्जत्फणामण्डलः
श्रीपार्श्वस्तिलकाङ्कितार्धरचनारुच्यः स्तवेन स्तुतः ।
दद्यान्मे निरवद्यमुख्यमगुणं स्वाज्ञापरिज्ञाविधौ
येन स्यां नवसोमसुंदरपरब्रह्मैकलीलालयः ॥ २५ ॥
इति श्रीमहोशानकपुरवरालङ्कारश्रीअश्वसेननृपनन्दनजिननायकस्तवनम्
श्रीतपागच्छाधिराजपरमगुरुप्रभुश्रीश्रीरत्नशेखरशिष्यपरमाणुविरचितम् ।

[ २२ ]

## श्रीचारूपमण्डनपार्श्वजिनस्तवनम् ।

श्रीचारूपपुरप्रधानवसुधालङ्कारचूडामणि-
प्रायं स्फारफणामणिद्युतिभरैराभासिताशामुखम् ।
कल्पक्षोणिरुहातिशैशववयःपत्रालिवित्रासकृत्-
कायच्छायमहं स्तवीमि मुदितः श्रीपार्श्वविश्वेश्वरम् ॥ १ ॥

अतुल्यकल्याणलसल्लतानामारोढुमूर्ध्वं तव मूर्धसंस्थाः ।
जगत्प्रभो ! स्फारफणाः श्रयन्ते श्रियं सदा माण्डपिकीमखण्डाम् ॥२॥

अङ्के शिरोऽग्रे च भुजङ्गधारी दृष्टोऽपि दुर्दोषविषापहारी ।
एकातपत्रो भुवने नरेन्द्रस्त्वमेव नम्रामरमानवेन्द्रः ॥ ३ ॥

धर्मोपदेशे फणनिःसपत्नरत्नोग्रमिश्रीकृतकृष्णकान्तिः ।
गर्जंस्तडित्वानिव देव ! दत्से मुदं न केषाममृतार्थिनां त्वम् ॥ ४ ॥

फणामणीनां तव देव ! दीप्रतरा द्युतो व्योमनि विस्फुरन्त्यः ।
राजन्ति रेषा इव काञ्चनस्य कषोपले जात्यतरस्य दत्ताः ॥ ५ ॥

तव प्रभो ! स्फारफणा भुजङ्गाः स्फुरन्मणिश्रेणिरुचारुणाङ्गाः ।
तथा दशन्त्यान्तरवैरिवारं यथा प्रतीकारकथा पुनर्न ॥ ६ ॥

सत्कज्जलश्यामलतां वहन्ती फणानणीयोमणिभिर्विभान्ती ।
दीपालिकारात्रिरिव प्रदीप्रदीपाऽस्तु मूर्त्तिस्तव हर्षहेतुः ॥ ७ ॥

फणाग्रजाग्रन्मणिराजिराजमानेन्द्रनीलामलनीलकायः ।
सत्पुष्पभृत् पत्रलहेमपुष्पमहीरुहौपम्यमशिश्रियस्त्वम् ॥ ८ ॥

विभिद्य मायद्दुरपोहमोहमहान्धकारं प्रकटानि कुर्युः ।
सप्तापि तत्त्वानि विभो ! फणाग्रजाग्रत्तमास्ते मणिदीप्रदीपाः ॥९॥

सदर्पसर्पा अपि सर्पशत्रुकदर्थनाभीतिमिवावहन्तः ।
त्वामाश्रयन्तीश ! फणामिषेण त्रैलोक्यरक्षाविहितैकदीक्षाम् ॥१०॥
फणोरगाणां प्रणताङ्घ्रिपापभीकोस्त्वमाहारपदे प्रयच्छन् ।
त्वां देव ! सर्वाभयदानदीक्षां यन्नात्यचारीस्तदिहाति चित्रम् ॥११॥
अद्यापि मूर्ध्ना धरणोरगेन्द्रस्तेऽत्यस्ति पिद्धांवुमहोपसर्गम् ।
वहन्यमानां विपदेशतत्त्वं नेतः ! कृतज्ञेषु धुरि स्थितोऽसि ॥ १२ ॥
स्फुरत्फणानां तव निःसपत्नप्रभा व्योमनि विस्तरन्त्यः ।
लोकत्रयीलोचनदत्तचित्रं विनापि भित्तिं रचयन्ति चित्रम् ॥ १३ ॥
प्रभो ! गभीरप्रकृतेर्विनीलदलोत्पलश्यामलभूरिभासः ।
फणास्तवाब्धेरिव भान्ति रत्नमिश्रोत्पतत्तुङ्गतरङ्गतुल्याः ॥ १४ ॥
स्फुरन्मणिस्फारफणान् दधाना अपि प्रदर्पास्तव देव ! सर्पाः ।
हर्षं प्रवर्षन्ति जनस्य दृष्टाः स्पृष्टाथ सङ्गो हि सतां शमाय ॥१५॥
श्रिताः फणास्त्वां मणिराजिभाजो रेजुः कृतार्थीकृतभव्यसार्थ ! ।
अतुल्यवल्ल्यः कुसुमाभिरामाः कल्पद्रुमं नन्वधिरूढवत्यः ॥ १६ ॥
अतुल्यकल्याणमहानिधानं लभ्यं लसद्भाग्यभरोदयेन ।
प्रभो ! भजन्ते भुजगा भवन्तं युक्तं मणीमण्डितमौलिमध्याः ॥१७॥

स्फारस्फूर्जत्फणानामनणुमणिगणोद्योतविद्योतिताशा-
चक्रं चारूपनामप्रवरपुरमहीमण्डनं पार्श्वनाथम् ।
यः स्तौत्येवं तमालद्रुमदलदलस्पर्द्धमानामलाङ्ग-
ज्योतिर्जालं स शर्माण्यनुभवति भवाम्भोधिपारस्थितानाम् ॥

[ २३ ]

श्रीहंसरत्नविरचितं

# श्रीशङ्खेश्वरपार्श्वनाथस्तोत्रम् ।

महानन्दलक्ष्मीघनाश्लेषसक्त ! सदा भव्यवाञ्छाविदानाभियुक्त ! ।
सुरेन्द्रादिसम्पल्लतावारिवाह ! प्रभो ! पार्श्वनाथाय नित्यं नमस्ते ॥१॥
नमस्ते लसत्केवलज्ञानधारिन् ! नमस्ते महामोहसंहारकारिन् ! ।
नमस्ते सदानन्दचैतन्यमूर्ते ! नमस्ते नमस्ते नमस्ते नमस्ते ॥ २ ॥
नमस्ते जगज्जन्तुरक्षासुदक्ष ! नमस्तेऽनभिज्ञाततत्त्वैरलक्ष ! ( क्ष्य !)
नमस्तेऽव्ययाचिन्त्यविज्ञानशक्ते ! नमस्ते नमस्ते नमस्ते नमस्ते ॥३॥
नमस्ते महादर्पकन्दर्पजेतर्नमस्ते शुभध्यानसाम्राज्य ! नेतः ! ।
नमस्ते मुनिस्वान्तपाथोजभृङ्ग ! नमस्ते नमस्ते नमस्ते नमस्ते ॥४॥
नमस्ते सदाचारकासारहंस ! नमस्ते कृपाधार ! विश्वावतंस ! ।
नमस्ते सुरश्रीयसंगीतकीर्ते ! नमस्ते नमस्ते नमस्ते नमस्ते ॥ ५ ॥
नमस्ते सुदुस्तारसंसारतायिन् ! नमस्ते चतुर्वर्गसंसिद्धिदायिन् ! ।
नमस्ते परब्रह्मशर्मप्रदायिन् ! नमस्ते नमस्ते नमस्ते नमस्ते ॥६॥
नमस्तेऽमितागण्यकारुण्यसिन्धो ! नमस्ते त्रिलोक्याप्त सम्बन्धबन्धो !।
नमस्ते त्रिलोकीशरण्याय नाथ ! नमस्ते नमस्ते नमस्ते नमस्ते ॥७॥
नमस्ते सुरेन्द्रादिसंसेव्यपाद ! नमस्ते नतेभ्यः सदा सुप्रसाद ! ।
नमस्ते तमःस्तोमनिर्नाशभानो ! नमस्ते नमस्ते नमस्ते नमस्ते ॥ ८ ॥

नमस्ते विभो ! सर्वविद्यामयाय नमस्तेऽङ्घ्रिसच्छन्दिलीलालयाय ।
नमस्तेऽसमश्रेष्ठदेवेश्वराय नमस्ते नमस्ते नमस्ते नमस्ते ॥९॥
जय त्वं जगन्नेत्रपीयूषपात्र ! जय त्वं सुधांशुप्रभागौरगात्र ! ।
जय त्वं सदा मन्मनःस्थायिमुद्र ! जय त्वं जय त्वं जय त्वं जिनेन्द्र ! ॥१०॥

इत्थं स्वल्पधियापि भक्त(क्ति)जनितोत्साहान्मया संस्तुतः
श्रीशङ्खेश्वरपार्श्वनाथ ! नतसद्भक्तैकचिन्तामणे ! ।
सर्वोत्कृष्टपदप्रदानरसिकं सर्वार्थसंसाधकं
तन्मे देहि जिनाङ्घ्रिपद्मविमलश्रीहंसरत्नायितम् ॥११॥

---

[ २४ ]

## श्रीहंसरत्नमुनिविनिर्मितं

# श्रीशङ्खेश्वरपार्श्वनाथच्छन्दः ।

---

आर्या—

सकलसुरासुरवन्द्यं ह्यगुणं जगदनिन्द्यमहिमानम् ।
श्रीशङ्खेश्वरपुरवरमण्डनमभिनौमि पार्श्वजिनम् ॥ १ ॥

त्रिभङ्गीच्छन्दः—

शिवसुखदातारं विश्वाधारं सौम्याकारं नेतारं
जितमदनविकारं करुणागारं हतरिपुवारं जेतारम् ।

कृतभवनिस्तारं परमोदारं स्तवनापारं त्रातारं
गुणपारावारं कीर्तिस्फारं केवलधारं धातारम् ॥ २ ॥
आनंदसक्तं तोषितभक्तं छद्मविमुक्तं सुव्यक्तं
मदमत्सरमुक्तं तारणसक्तं विषयविरक्तं शिवरक्तम् ।
अव्याहतभद्रं धैर्यगिरीन्द्रं क्षमासमुद्रं सन्मुद्रं
मुखनिर्जितचन्द्रं प्रणतसुरेन्द्रं महामुनीन्द्रं निस्तन्द्रम् ॥३॥
सुखदायीशरणं दुःखितशरणं वन्दितचरणं विगतरणं
कृतदीनोद्धरणं कलिमलहरणं विमलीकरणं प्रवरपणम् ।
प्रकटीकृतविनयं दर्शितसुनयं प्रवचननिलयं सत्यमयं
अगणितगुणनिचयं मुनिजनहृदयं लब्धसुविनयं क्षपितभयं ॥४॥
कवलीकृतकालं नापिकरालं नतजनपालं सुदयालु....
दुष्कृततृणदात्रं स्तुतिशतपात्रं सुखकृद्यात्रं सत्गात्रम् ।
भयलतालवित्रं परमपवित्रं चारुचरित्रं दिनरात्रम्
..................................................॥ ५ ॥
जृम्भितकलिजातं त्रिभुवनतातं योगिध्यातं विख्यातं
विहिताघविघातं क्षपितासातं निर्जितपातं निष्णातम् ।
सम्भावितदासं मुक्तायासं विश्वावासं सद्भासं
कीर्तिस्थगिताशं विभ्रमविनाशं सदाप्रकाशं पूर्णाशम् ॥६॥
अकलितमहिमानं बुद्धिनिधानं मुक्तिनिदानं गतमानं
कृतकमठविगानं जगत्प्रधानं परमात्मानं सुज्ञानम् ।
यदुकुलकृतरक्षं सर्वसमक्षं विद्रुतविपक्षं दुर्लक्ष्यं
दुर्गतिहतिदक्षं साधुसपक्षं वशीकृताक्षं पद्माक्षम् ॥७॥

स्तुतिशतैरमेयं परमसुपेयं सुरनरगेयं सुध्येयं
अनुभवविज्ञेयं स्वान्तध्येयं वि (जि) ष्णुमजेयं वामेयम् ।
भुजगेश्वरकेतुं भवजलसेतुं मलमपनेतुं सद्धेतुं
शान्त्या समुपेतं श्रुतिसमवेतं सिद्धिनिकेतं वन्दे तम् ॥९॥

गीतिः—

इत्थं स्तुतोऽसि भक्त्या
निजसेवां सततमीश ! मे वितर ।
बुधनानरत्नचरणा-
रविन्दसंसेविहंसरत्नाय ॥ ९ ॥

---

[ २५ ]

श्रीजिनभद्रसूरिमणीतं

पट्टपत्तनमण्डन-

## श्रीपार्श्वजिनस्तोत्रम् ।

---

पट्टपत्तनपुटभेदनमण्डनमभिनौमि पार्श्वजिनमेनम् ।
सिंहासनमासीनं सातिशयं नीलकान्तिघनम् ॥ १ ॥
यः पर्यटन्नहःस्वादिरहर्निशमप्यनन्तनिर्गतिचिद्भावान् ।
निशं कामं गाढद्वेषी न निद्रात्व निरपायः ॥ २ ॥

जीवाजीवादिपदार्थसार्थनिर्भासकं निरावरणम् ।
सकलं केवलमतुलं प्राप्याभूत् सर्ववेदी यः ॥ ३ ॥

वचनातिशयैः पञ्चत्रिंशतालङ्कृतं य इह वचनम् ।
साष्टगुणं द्वात्रिंशद्दोषैर्विकलं कलं वदति ॥ ४ ॥

सेन्द्राः सुरा भुवनपा ज्योतिष्का व्यन्तराः सपरिवाराः ।
सव्यापाराः साराः सेवन्ते यच्चरणकमलम् ॥ ५ ॥

मूलातिशया एते चत्वारो यस्य जगति राजन्ते ।
अपरेऽपि चतुस्त्रिंशत् सङ्ख्याः ख्याता सकललोके ॥६॥

चत्वारः सहजाता एकादशघातिकर्मघातोत्थाः ।
एकोनविंशतिरथो देवकृताश्चेति सर्वेऽपि ॥ ७ ॥

इत्थं श्रीअश्वसेनान्वयजलधिसमुल्लासचन्द्रोपमानः
प्रोद्यन्मोहान्धकारप्रशमनविधये सूर्यतुल्योपमानः ।
नूतः सर्वाद्भुतेनातिशयगुणगणेनेह पार्श्वो जिनेन्द्रः
सम्पत्तिं वस्तनोतु प्रसृमरजिनभद्रानुगां सोऽस्तन्द्रः॥८॥

---

[२६]

## श्रीपार्श्वजिनस्तोत्रम् ।

---

जीरापल्लिपुरोत्तमाङ्गतिलकः श्रीपार्श्वकल्पद्रुमः
श्रीवर्मेन्द्रनन्दनः शिवकरः श्रीअश्वसेनात्मजः ।
कासश्वासभगन्दरज्वरभरातीसारसंस्फेटकैः
श्रीदेवेन्द्रनरेन्द्रचन्द्रपटलैः संसेव्यमानोऽवतात् ॥ १ ॥

न प्रेता नैव भूता न च निचितबला मुद्गला नो पिशाचा
नो शाकिन्यो न चोरा न च नरपतयो विग्रहा नो ग्रहा नो ।
नो रोगाः स्पष्टमष्टाधिकशतमितयस्तं जनं पीडयन्ति
श्रीजीरापल्लिपार्श्वस्मृतिरतिमहिमा स्थेयसी यस्य चित्ते ॥२॥

देवाधीशाग्रपादल्लसदयालङ्कारसारस्फुर-
न्मुक्तानक्रकल्पवर्षिकाभिःपुरीगम्यपरिस्थितो नायकः ।
सर्पाङ्गः परितृप्तनिर्जनमहस्फूर्त्यो सुकीर्त्या दय-
ञ्चोर्जां घ्नन्नपि वः विपत्तैर्मिततं श्रीपार्श्वचिन्तामणिः ॥३॥

सौभाग्यमूर्तिः सश्रीको नानागोपगणैः स्तुतः ।
तनु मां परमां प्रीतिं श्रीपार्श्वः पुरुषोत्तमः ॥ ४ ॥

---

[ २७ ]

## श्रीलक्ष्मीसागरसूरिविरचितं

# श्रीपार्श्वजिनस्तवनम् ।

श्रीवामेयं विधुमधुसुधासारसारस्वभावं
न्यायापेतोद्धतमतिचमत्कारकारिप्रभावम् ।
'जीरापल्ली'पदमविपदं वारिदच्छायदेहं
निःसन्देहं विमलकमलाकेलिगेहं स्तुवेऽहम् ॥ १ ॥

अवचूरिः ।

अहं श्रीवामेयं स्तुवे । वामाया अपत्यं वामेयः तम् । किं विशिष्टं वामेयम्? 'विधुमधुसुधासारसारस्वभावम्' विधुः–चन्द्रः, मधु–मधुरं वस्तु, सुधा–अमृतं, तेषां आसारो–वेगवती वृष्टिः, तद्वत् सारः–श्रेष्ठः स्वभावो यस्य तम् । न्यायापेतोद्धतमतिचमत्कारकारिप्रभावम् ।' न्यायापेता–न्यायरहिता ये उद्धतमतय–उत्कटमतयस्तेषां चमत्कारकारी प्रभावो यस्य स तम् । पुनः किंविशिष्टम् ? 'जीरापल्लीपदम्' जीरापल्ल्यां पदं—स्थानं यस्य । पुनः कीदृशम्? अविपदन्' विपद्रहितम् । पुनः कीदृशम्? 'विमलकमलाकेलिगेहम्' विमला चासौ कमला च विमलकमला तस्याः केलिगेहम्–क्रीडागृहम् ॥ १ ॥

ભાષાર્થ—

હું શ્રીવામેય–પાર્શ્વનાથનઈ સ્તવૂં, ન્યાયિ કરી અપેત–રહિત છઈ જે ઉદ્ધતમતિ–ઉત્કટમતિ તેહન્હઈ ચમત્કાર કારિ જેહનઉ પ્રભાવ–મહિમા છઈ. જીરાપલ્લી–જીરાઉલી તિહાં પદ–સ્થાનક છઇ, 'અવિપદ' વિપદ્–કષ્ટિઈ રહિત છઇ. વિમલ–નિર્મલ છઈ જે કમલા–લક્ષ્મી તેહન્હઇ કેલિગેહ–ક્રીડાગૃહ છઈ ॥ १ ॥

स्फाराकारा ननु जिनपते ! दृश्यते ते न मूर्तिः

स्फूर्तिस्तस्याः पुनरनुपमा विश्वविश्वप्रसिद्धा ।

शौण्डीराणां न खलु महिमा मूर्तिमात्रानुयायी

यद् बालोऽपि प्रबलकरटिध्वंसधीरो मृगारिः ॥ २ ॥

चोराचारप्रचुरचरटव्यालमालाकराले

प्रायो यस्मिन्नलभत पुरा न प्रवेशं मनोऽपि ।

अवचूरिः ।

हे जिनपते ! ननु-निश्चितम्, तव मूर्तिः स्फाराकारा न दृश्यते, पुनस्तस्या मूर्तेः स्फूर्तिः अनुपमा वर्तते । पुनः किंविशिष्टा मूर्तिः ? 'विश्वविश्वप्रसिद्धा' सकलजगद्विख्याता । खलु-निश्चितम् । शौण्डीराणां महिमा मूर्तिमात्रानुयायी न । यतो-यस्मात् कारणात् बालोऽपि मृगारिः-सिंहः प्रबलकरटिध्वंसधीरो भवति ॥ २ ॥

हे नाथ ! भवद्भक्तिदक्षा मनुष्याः साम्प्रतं तं गुरुगिरिपथं गेहाङ्गणमिव लङ्घन्ते । किंविशिष्टा मनुष्याः ? 'वीतशङ्कातङ्काः' प्रायो-

ભાષાર્થ—

હે જિનપતે ! શ્રીપાર્શ્વનાથ ! તાહરી મૂર્તિ સ્ફાર-વિરૂઢ આકાર એવંવિધ ન દીસઈ પણ તેહ મૂર્તિની સ્ફૂર્તિ-સ્ફુરતું અનુપમા-ઉપમાનરહિત વર્તઈ, વિશ્વ-સઘલઈ વિશ્વ-જગતિ પ્રસિદ્ધ-વિખ્યાત છઈ, ખલુ-નિશ્ચિઈ. શૌંડીર પુરુષતણું મહિમા મૂર્તિમાત્રાનુયાયી-મૂર્તિ જેવડું નહી. જેહ કારણ તુ બાલ-બાલક મૃગારિ-સિંહ પ્રબલ-મહોન્મત્ત કરી-હસ્તી તણા ધ્વંસનઇ વિષયિ ધીર-ધૈર્યયુક્ત હુઈ ॥ ૨ ॥

હે નાથ ! તાહરી ભક્તિનઈ વિષઈ દક્ષ-પ્રવીણ મનુષ્ય-પુરુષ હવડાં તે ગુરુ-ગુરૂઇ ગિરિ-પર્વત તણૂ પંથા-માર્ગ, ગેહાંગણ-ઘરતણાં આંગણાની પરિ ઉલ્લંઘઈ, વીત-ગિઉ શંકાતણૂ આતંક-ભય છઈ, પ્રાય-બાહુલ્યિઈ જેહ

तं लङ्घन्ते गुरुगिरिपथं साम्प्रतं वीतशोका-

तङ्का गेहाङ्गणमिव भवद्भक्तिदक्षा मनुष्याः ॥३॥

येषां क्रीडा परधनपरप्राणसंहाररूपा

भूपाः सर्वेऽपि हि वहुवला येषु कुण्ठस्वरूपाः ।

जीरापल्ल्याः पथि विचरतां सोदरन्त्येव तेऽपि

स्तेना येनानुपमितिवलो रक्षकस्त्वं जिनेश ! ॥ ४ ॥

---

अवचूरिः ।

वाहुल्येन यस्मिन् मार्गे पुरा-पूर्वं मनोऽपि प्रवेशं न अलभत । किं॰ विशिष्टे मार्गे ? चौराचारप्रचुरचरटव्यालमालाकराले ॥ ३ ॥

हि—निश्चितम्, येषां चौराणां परधनपरप्राणसंहाररूपा क्रीडा वर्तते, येषु चौरेषु सर्वेऽपि भूपा-राजानः कुण्टस्वरूपा वर्तन्ते । किं विशिष्टा भूपाः ? वहुवलाः ? तेऽपि स्तेनाः-चौरा जीरापल्ल्याः पथि विचरतां पुरुषाणां सोदरन्त्येव हे जिनेश ! येन कारणेन त्वं रक्षकोऽसि । किं विशिष्टस्त्वम् ? अनुपमितवलः ॥ ४ ॥

---

ભાષાર્થ—

માર્ગનઇં વિષયિં પુરા-પૂર્વિઈં મનિઇં પ્રવેશ ન લીધું. ચોરના આચારનિં વિષઇં પ્રચુર-ઘણા છઇં જે ચરટ-અન્યાયીયા, તેણ જે ભણિત, વ્યાલ દુષ્ટ જીવ તેહ તણી જે માલા-શ્રેણી તેણિં કરાલ-રૌદ્ર છઈ ॥ ૩ ॥

હિ-નિશ્ચઈ જે ચોરની પરધન અનઈ પર પ્રાણનઈ સંહારરૂપ-સંહરિવાનઈ વિષઇ ક્રીડા વર્તઇં. જેહ ચોરનઈ વિષયિં સઘલા ભૂપ-રાજાન, કુંઠ-મંદસ્વરૂપ સ્વભાવ એવંવિધ વર્તઈ.બહુ-ઘણું-બલ-સૈન્ય છઈ.તેહઈ સ્તેન-ચોર-જીરાપલ્લિના પંથનઈ-માર્ગનઇં વિષયિં વિચરતા-જાતા પુરૂપ હૂંઈ તેહનઉં સોદરપણું આચરઈ. હે જિનેશ !-શ્રી પાર્શ્વનાથ ! જેણઈ કારણિં તૂં રક્ષક-રાખણહાર છઈ. અનુપમિત-ઉપમાનરહિત બલ છઈ. ॥ ૪ ॥

सार्थः पार्थ्यो न च न च बलं क्वापि कस्याप्यपेक्ष्यं
भूयो भूयो गहनगहनो गाहनीयश्च पन्थाः ।
एकैकस्यापि च विचरतस्त्वत्प्रसादेन मार्गे
जीरापल्ल्याः परपरिभवो नैव भूतो न भावी ॥ ५ ॥

ये त्वद्ध्यानोपगतमतयो दूरदेशेऽपि तेषां
स्वस्थानस्थः स्थगयसि रुजः प्राणिनां प्राणतोऽपि ।

---

अवचूरिः ।

हे नाथ ! जीरापल्ल्या मार्गे सार्थो न च प्रार्थ्यः, च-अन्यत् जीरापल्ल्याः मार्गे क्वापि कस्यापि बलं न अपेक्ष्यम् । च-अन्यत् भूयो भूयः-पुनरपि पुनः जीरापल्ल्याः पन्था गाहनीयः । किं विशिष्टः पन्थाः ? गहनगहनः । च-अन्यत् हे नाथ ! त्वत्प्रसादेन एकैकस्यापि पुरुषस्य विचरतः सतः परपरिभवो नैव भूतो न भावी ॥ ५ ॥

हे नाथ ! ये पुरुषाः दूरदेशेऽपि त्वद्ध्यानोपगतमतयो वर्तन्ते । तेषां प्राणिनां रुजः-रोगान् स्वस्थानस्थः सन् प्राणतोऽपि-बलात्कारेण

---

ભાવાર્થ—

હે નાથ ! જીરાપલ્લીનઈ માર્ગિ સાર્થ-સંઘાત ન પ્રાર્થિવું-ન વાંછિવું, ચ-અન્યત્ જીરાપલ્લીનઈ માર્ગિ કિહિંઈ કેહિનૂં બલ ન વાંછિવૂં. ચ-અનઈ ભૂયઃ ભૂયઃ—વલી વલી જીરાપલ્લીનું માર્ગ ગાહવું, ગહન વનિ કરી ગહન-દુઃખગાહ છઈ. ચ-અનઈ હે નાથ ! તાહરઈ પ્રસાદિઈ એકેકા પુરૂષ હુઈ વિચરતા-જાતાં હુતા પર-અનેરાનું પરિભવ-પરાભવ ન હુઉ-ન હુ હુસિઈ ॥ ૫ ॥

હે નાથ ! પુરૂષ દૂરદેશિ-વેગલઈ હૂતા તાહરા ધ્યાનનઈ વિષયિ ઉપગત થઈ મતિ-બુદ્ધિ એવંવિધ વર્તઈ, તેહ પ્રાણીના રૂજ-રોગ-રવ-આપણઈ સ્થાનિ સ્થિત-રહિઉહૂંતં પ્રાણ-બલાત્કારિઈ સ્થગઈ-ફેડઈ. એ તાહરૂ પ્રભાવ-મહિમા

नासम्भाव्यो भवति भवतो भावितोऽयं प्रभावः
सूरो दूरोऽपि हि न सहते लोकमध्येऽन्धकारम् ॥६॥

मुक्ता वैद्यैरपि बहुविधैरौषधैरप्यसाध्या
विध्याता ये चिरविरचितैर्नापि मन्त्रादियोगैः ।
तेऽप्यातङ्का गतभव ! भवन्नामधेयाभिराम-
ध्यानादेवाम्बुन इव दवा नाम निर्नाम नेशुः ॥७॥

अवचूरिः ।

स्थगयसि । अयं भवतः-तव प्रभावः भावितः सन् असम्भाव्यो न भवति । हि-निश्चितम् । सूरः-श्रीसूर्यः दूरोऽपि सन् लोकमध्ये अन्धकारं न सहते ॥

हे नाथ ! ये आतङ्काः-रोगा वैद्यैरपि मुक्ताः, ये रोगा औषधैः बहुविधैरपि असाध्या वर्तन्ते, ये रोगा मन्त्रादियोगैरपि न विध्याताः, किं विशिष्टैर्मन्त्रादियोगैः ? चिरविरचितैः । हे 'गतभव!' गतसंसार ! । नाम इति कोमलामन्त्रणे । तेऽपि आतङ्काः, निर्नाम यथाभवति तथा । नेशुः-नाशं प्रापुः। कस्मात् ? 'भवन्नामधेयाभिरामध्यानादेव ।' के इव ? दवा इव, यथा दवा अम्बुनः-पानीयात् निर्नाम नश्यन्ति तथा ॥ ७ ॥

ભાષાર્થ—

ભાવિત-મનિ ચિંતવિઉ હૂંઉ અસંભાવ્ય ન હુઈ. હિ-નિશ્ચિઈં સૂર-શ્રીસૂર્ય દૂર-વેગલુઈ હુતુ લોક માહિં અંધકાર-અંધારૂ ન સહઇ ॥ ૬ ॥

હે નાથ ! જે આતંક-રોગ વૈદ્યએ મૂકયા, જે રોગ ઔષધિં બહુવિધે -નાનાવિધે અસાધ્ય વર્તઈ, જે રોગ મંત્રાદિ કયોગિ નહી વિધ્યાત-ઓહલવ્યા, ચિરકાલ લગુ વિરચિત-રચ્યા છઈ. નામ ઇસિ કોમલામંત્રણિ, તેહઇ આતંક-રોગ, નિર્નામ-જિમ હુઇ તિમ. નાઠા-નાશ પામ્યા. દેવ ! તાહરા નામધેય-નામના અભિરામ-મનોજ્ઞ ધ્યાન-ધ્યાયિવા તુંજી, જિમ દવ-દવાનલ અંબુ-પાણીતુ નિર્નામ નાશઇ ॥ ૭ ॥

काशश्वासज्वरकरशिरःकुक्षिचक्षुर्विकाराः
शोषं श्लेष्मा क्षतमबलता वातपित्तप्रकोपाः ।
कण्डू कुष्टश्वयथुदवथुर्गुल्म दुर्नाम पामा
रक्षां दक्षे त्वयि विदधति व्याधयो नैव बाधाम् ॥८॥

रोगाभोगा गहनदहनव्यालदुर्मन्त्रयोगा
ध्याते तात ! त्वयि तनुमतां नो भवेयुः पुरोगाः ।

---

अवचूरिः ।

हे नाथ ! त्वयि दक्षे रक्षां विदधति सति व्याधयो बाधां नैव विदधति-कुर्वन्ति । के ते व्याधयः ? काशश्वासज्वरकरशिरःकुक्षिचक्षुर्विकाराः, शोषः, श्लेष्मा, क्षतम्, अबलता, वातपित्तप्रकोपाः, कण्डू कुष्ठश्वयथुदवथुः गुल्म, दुर्नाम, पामा ॥ ८ ॥

हे नाथ ! त्वयि ध्याते सति तनुमतां-प्राणिनां रोगाभोगा गहनदहनव्यालदुर्मन्त्रयोगाः पुरोगा नो भवेयुः । हे नाथ ! जगति-विश्वे एव

---

भावार्थ—

હે નાથ તને દક્ષ-ડાહ્યો રક્ષા કરતે છતે વ્યાધિ-રોગ બાધા-પીડા ન કરે. કયા તે વ્યાધિ ? કાસ-ઉધરસ, શ્વાસ-સાસ, જ્વર-તાવ, કર-હાથનાપણું વિકાર, શિર-મસ્તકનો વિકાર, કુક્ષિ-કુખનારૂ વિકાર, ચક્ષુઃ-આંખિતણુ વિકાર, શોષ-તૃષા, શ્લેષ્મ, ક્ષત-છીક, અબલતા-અબલપણું, વાતપ્રકોપ, પિત્તપ્રકોપ, કંડૂ-ખર્જિ, કુષ્ટ-કોઢ, શ્વયથુ-સોજિઉ, દવથુ-તાપ, ગુલ્મ-ગાંઠિ, દુર્નામ-હરસ, પામા-ખાજ ॥ ૮ ॥

હે નાથ ! તહું ધ્યાઈ છતઈ તનુમત-પ્રાણી નઈ રોગ તણા આભોગ-વિસ્તાર, ગહન-દુસ્તર દહન વૈશ્વાનર, વ્યાલ-દુષ્ટ સર્પ, દુર્મંત્રયોગ-શાકિની મંત્રાદિક પુરોગ-અધિકાર ન હુઈ, હે નાથ ! જગતિ-વિશ્વિ એ બાધ-બદિ·

वाह्योऽप्येष श्रुतिपथगतः कस्य चित्ते विधत्ते
नैवाश्चर्यं जगति महिमा तावकीनो नवीनः ॥९॥

यस्मिन्नन्येऽजनिपत सुरा निःप्रभा निःप्रभावाः
काले तस्मिन्नपि विलसति त्वत्प्रतापप्रभावः ।
यद् ग्रीष्मर्तुर्नयति सलिलोल्लासमस्तं समस्तं
तस्मिन् काले कलयति किल प्रत्युताम्भोधि ऋद्धिम् ॥

अवचूरिः ।

वाह्योऽपि तावकीनो महिमा श्रुतिपथगतः सन् कस्य चित्ते आश्चर्यं नैव विधत्ते ?। अपि तु सर्वस्यापि विधत्ते । किं विशिष्टो महिमा ? 'नवीनः' ॥९॥

हे नाथ ! यस्मिन् काले अन्ये सुराः निःप्रभावाः अजनिषत, किं-विशिष्टाः सुराः ? निःप्रभाः । तस्मिन्नपि काले त्वत्प्रतापप्रभावः विल-सति । यतः—यस्मात् ग्रीष्मर्तुः समस्तं सलिलोल्लासं अस्तं नयति । किल इति सत्ये । तस्मिन् काले प्रत्युत अम्भोधिः ऋद्धिं कलयति ॥ १० ॥

ભાષાર્થ—

બૂતઈ તાહરૂ મહિમા-પ્રભાવ શ્રુતિપથગત-સાંભલિઉ હુતુ કહિનઈ ચિત્તિ આશ્ચર્ય ન ધરઇ ? અપિ તુ સર્વનઇં ચિત્તિ ધરઈ. નવીન-નવું છઇ ॥૯॥

હે નાથ ! જેણઈ કાલિં અનેરા સુર-દેવ નિઃપ્રભાવ-પ્રભાવરહિત હોઆ, નિર્ગત-ગઇ પ્રભા છઈ તેણઈ કાલિ તાહરા પ્રતાપનું પ્રભાવ-મહિમા વિલસઈ, જેહ કારણ તુ ગ્રીષ્મઋતુ સમસ્ત-સઘલુ સલિલોલ્લાસ-જલાશય અસ્ત પમાડઇ. કિલ ઇસિઈ સાચઇ. તેણું કાલિ પ્રત્યુત-હાથલાસી (?) અંભોધિ-સમુદ્ર ઋદ્ધિ પામઇ ॥ ૧૦ ॥

विश्वाधारामतरलतरत्तारतारामुदारा-
मीश ! स्वीयां क्षिप मयि दृशं देव ! ते सेवकोऽस्मि ।
ॐ कुर्वाणे भवति भवति स्वार्थसिद्धिः समस्ता
तन्मां स्वाहासनपतिनतोपेक्षितुं ते न युक्तम् ॥ ११ ॥
किं कल्पद्रुः किममरगवी कामकुम्भोऽपि किं वा
दत्ते चिन्तामणिरपि च किं किं च धन्वन्तरिर्वा ? ।

---

अवचूरिः ।

हे ईश ! मयि विषये स्वीयां दृशं क्षिप । किंविशिष्टां दृशम् ? विश्वाधाराम् । पुनः कीदृशीम् ?, अतरलतरत्तारताराम् । पुनः किम्भूतां दृशम् ? उदाराम् । हे देव ! अहं ते-तव सेवकोऽस्मि । भवति-त्वयि ॐ कुर्वाणे सति समस्ता स्वार्थसिद्धिर्भवति । हे स्वाहासनपतिनत !-हे देवेन्द्रस्तुत ! तत्-तस्मात् कारणात् ते-तव मां उपेक्षितुं युक्तं न ॥ ११ ॥

कल्पद्रुः-कल्पवृक्षः किं दत्ते ? अमरगवी किं दत्ते ?, वा-अथवा कामकुम्भोऽपि किं दत्ते ?, च-अन्यत् चिन्तामणिरपि किं दत्ते ?, धन्वन्तरिर्वा किं दत्ते ?, हे श्रीवामेय ! त्वयि प्रसन्ने सति अवश्यं निरन्तरं

---

ભાષાર્થ—

હે ઈશ ! માહરઈ વિષઇ સ્વીય-આપણી દશ-દૃષ્ટિ ક્ષિપ-આરોપિ, વિશ્વનઇ આધારભૂત છઇ. અતરલ-નિશ્ચલ તરત્-તરતી તારા-મનોજ્ઞ, તારા-કીકી કનીનિકા છઇ. ઉદાર-ઉત્કૃષ્ટ છઈ. હે દેવ ! હું તાહરૂં સેવક છું. તઈ ઓંકરતઈ-સ્વીકાર કરતઇ હુતઈ સમસ્ત-સઘલી સ્વ-આપણા અર્થની સિદ્ધિ હુઈ. હે સ્વાહાસન-દેવ તેહનું પતિ ઇન્દ્ર' તેણઈ નત-સ્તુત ! તેહ કારણ તું-તુઠ હુઇ-મઇ ઉવેખવા યુક્ત નહી ॥ ૧૧ ॥

કલ્પવૃક્ષ કિસિઉં દિઇં ?, અમરગવી-કામધેનુ કિસિઉં દિઇ ?, વા-અથવા કામકુંભ-પૂર્ણકલશ કિસિઉં દિઇ ?, ચ-અન્યત્ ચિંતામણિ કિસિઉં દિઇ ?, વા-

पिशाचदुर्मुद्गलवानमन्तरा महोरगा राक्षसयक्षकिन्नराः ।
परेऽप्यसद्दृष्टिसुरास्तव क्रमाश्रितान् न हन्तुं प्रभविष्णुविक्रमाः ॥१०॥
भयंकरा भिल्लभरैर्धनुर्धरैः सुदुर्गमा कर्कशकर्करोत्करैः ।
अलङ्घनीया गिरिकूटकोटिभिर्विसङ्कटा कण्टकितैस्तरूच्चयैः ॥११॥
अपीदृशी त्वत्पदपद्ममण्डिता बलातुलैर्वैरिबलैरखण्डिता ।
सुभूरभूत् पल्लिरियं पुरीनिभा सतां हि सङ्गः शुभसम्पदां पदम् ॥युग्मम्॥
सदा त्वदास्यद्युतिसारसागरे सुवृत्तमुक्तोपमदन्तसन्ततौ ।
सनेत्रमीने फणभृत्फणामणिप्रभाः प्रवालाङ्कुरवद् विरेजिरे ॥ १३ ॥
प्रभा भवत्यञ्चति धीरताखिला श्रयत्यपि श्रीः कलयत्यलं कला ।
इयर्ति मुक्तिर्न चिरात् तमादरात् प्रयासि यस्य त्वमिह प्रसन्नताम् ॥

एवं पन्नगराजराजितपदं पद्मावतीपूजितं
जीरापल्लिपुरीपुरन्दरमहं पापच्छिदेऽस्तग्रहम् ।
संस्तुत्योदयधर्मभासनपरं श्रीपार्श्वतीर्थङ्करं
नाथे नाथमिदं तदङ्घ्रियुगले चेतो ममालीयताम् ॥१५॥

---

[ २९ ]

नवग्रहस्वरूपगर्भितं

## श्रीपार्श्वजिनस्तवनम् ।

---

अरिहं थुणामि पासं लच्छिनिवासं गुणाण आवासं ।
दुरियारिकयविणासं पसमियपावं नमह पासं ॥ १ ॥
सोलसविज्जादेवी पउमा विजया जया य वइरुट्टा ।
कलिकुंड धरण पासो पास जिणिंदं नमंसंति ॥ २ ॥

जाओ कलिंगदेसे भरणीए रत्तिकंत पउमकरो ।
उड्ढमहो गहनाहो सहसकरो पणमए पासं ॥ ३ ॥
समदिट्ठि सोमकंती चित्ताए जवणदेससंभूओ ।
अमियकरो सोलकरो चंदो पणमेइ जिण पासं ॥ ४ ॥
अरुणो मालवभाए उत्तरसाढाइ उड्ढदिट्ठीए ।
नवकिरणो भूमिसुओ पणमइ पासं समुल्लासं ॥ ५ ॥
पीओ कडक्खदिट्ठी जाओ मगहे धणिट्ठरिक्खंमि ।
रोहिणिवल्लहतणओ पंचंसु बुहो नमइ पासं ॥ ६ ॥
नीलरइ सम्मदिट्ठी बारसकिरणो य सिंधुदेसभवो ।
उत्तरफग्गुणिजाओ सुरमंती नमइ जिण पासं ॥ ७ ॥
जिट्ठ मरहट्ठ भूओ सोलसकिरणो कडक्खदिट्ठी य ।
गहभूओ असुरगुरू सुक्को सुक्को नमइ पासं ॥ ८ ॥
कसिणो सुरट्ठदेसे सत्तंसू रेवईइ अहिदिट्ठी ।
सूरसुओ पणइपिओ पणमइ पासं सुणिब्भंतं ॥ ९ ॥
अहिदिट्ठि कसिणकंती बब्बरकूलम्मि भरणिरिक्खम्मि ।
सिरमित्तो गहमल्लो राहू पणमेइ जिणपासं ॥ १० ॥
जाओ पुलिंदेसे असलेसाए अणेगवण्णो य ।
अंङ्कूर रुद्ददिट्ठी सफणो केऊ नमइ पासं ॥ ११ ॥
इय गहगणपणयपयं पूयंति थुणंति जे जिणं पासं ।
ते सिद्धिबुद्धिवररिद्धिसंजुया हुंति नरपवरा ॥ १२ ॥+

+ नवग्रहस्तुतिः—ॐ आदित्य-सोम-मंगल-बुध-गुरु-शुक्र-शनैश्चर-राहु-केतुप्रमुखाः खेचरा जिनपदपुरतोऽवतिष्ठन्तु स्वाहा ।

[ ३० ]

## मन्त्राक्षरगर्भितः

# श्रीपार्श्वनाथस्तवः ।

ॐ ह्रीं अर्हमथो ×नमो भगवते श्रीपार्श्वनाथाय यो
मध्ये पङ्कजमूर्ध्नि मूर्तिरतनुः स्फारस्फटामण्डितः ।
ॐ ह्रीं श्रीं धरणेन्द्रसेवितचतुर्दिक्पार्श्वभागेऽष्टभिः
पत्रस्थैः सहिताय वर्णनिवहैः पद्मावतीमुख्यकैः ॥ १ ॥
अट्टेमट्टे जिनेन्द्रक्रमकजनिकटे क्षुद्रसंसद्विघट्टे
क्षुद्रं द्राग् देवि ! पार्श्वक्रमकमलजुषां स्तम्भय स्तम्भयोच्चैः ।
स्वाहान्तेऽथ त्रिलोकीत्रिगुणपरिवृता क्रोंनिरुद्धे ! विदध्याः
सद्यः सिद्धिं मनीषां विजयमसुमतामिष्टदा कामधेनुः ॥ २ ॥
आस्थानेषु महीभुजां स विजयी नश्यन्त्यवश्यं ततो
वेलैकान्तरिकत्रिनित्यकमहाचातुर्थिकाद्या ज्वराः ।
नालं मुद्गलशाकिनीप्रभृतयस्तातुः पुरस्त्वादृशो
निर्भीको भुवि चम्भ्रमीति य इमां त्वत्पादसेवां वहेत् ॥३॥

---

×स्तवेऽत्र गुप्तीकृतत्रिभुवनविजयपताकानाम-श्रीपार्श्वनाथमन्त्रश्चैवम्-
ॐ नमो भगवते श्रीपार्श्वनाथाय ह्रीँ धरणेन्द्रपद्मावतीसहिताय अट्टेमट्टे क्षुद्रविघट्टे क्षुद्रान् स्तम्भय स्तम्भय स्वाहा ।

[ ३१ ]

## श्रीजयकीर्त्तिसूरिविरचितं

# श्रीपार्श्वदेवस्तवनम् ।

सदा वासना पासना पाय पेषी नवां काज संसारनां हो उवेषी ।
धरइ नाम जे ताहरउं देव ! होयइ महीना हि तेना हवा मे महीयइ ॥

व्याख्या ।

ॐ नमः श्रीसर्वज्ञाय ॥ श्रीपूज्याराध्यध्येय–श्रीमदञ्चलगच्छेशश्री–जयकीर्त्तिसूरीश्वरविरचितश्रीपार्श्वदेवस्तवनावचूरिः सङ्क्षेपतो लिख्यते । तत्रेदमादिवृत्तम्—

[ सदावासनापासनापायपेषी नवाङ्काजसं सारनाहो ! उवेषी ।
धरइनामजेताऽहर उदेव हि य इमहीनाहितेना हवामे महीय इम् ! ॥

१ 'हे 'सारन !' सारं नं–ज्ञानं यस्य, तत्सम्बोधनम् । हे 'अहीनाहितेन !' अहीनः–धरणेन्द्रस्तत्र आहिता–न्यस्ता या ई–लक्ष्मीः तस्या इन !, सेवकश्रियः स्वाम्यायत्तत्वात् । 'हे अहवामे' अहो सम्बोधने । यस्त्वम् ईषद्दीनसत्त्वतया अल्प मे अमे (?) इं–कामं अहरः–हृतवान् । 'ही' इति विस्मये । किंविशिष्टं इम ? 'नवाङ्काजसम्' नवा अङ्का–अक्षसूत्राद्या येषां ते अजाः–ब्रह्माद्याद्यो देवास्तान् स्यति–विडम्बयति इति यस्तम् । किंरूपस्त्वम् ? सदावासनायाः–सुश्रद्धायाः अपासनं–निराकरणं येस्तान् अपायान्–क्लेशान् पिनष्टि–चूर्णयति इति 'सदावासनापासनापायपेषी'। पुनः किंविशिष्टस्त्वम् ! उः–ज्ञानं तया वेवेष्टि–विश्वं व्याप्नोति इत्येवंशीलः । यद्वा उः–शिवः तद्वद् वेवेष्टि इति 'उवेषी' । तथा 'धरइनामजेता' धरः–कुलाचलः, इनः–सूर्यः तद्वद् आमानां–रोगाणां जेता । 'आरोग्यं भास्करादिच्छेत्' ( ) इति वचनात् । 'उङ् कुङ्' धातोः क्विपि उत् । ततः उदेव–वक्ता एव, अर्थात् धर्मस्य । 'इं' सम्बोधने । अहम् । यत्तदोर्नित्यसम्बन्धात् । तं त्वां महीये 'महीङ्' कण्ड्वादिगणस्थः, पूजयामि ॥ १ ॥

१

अथ अन्यध्यानापनयनायाह—

जगन्नाथ ! सेवा करउ कोटनामी मलउ मान माया न ही के मुधामी
इस्या ध्यान तोरा धरइ चित्त मोरा सही च्छांडिवा मार संचार दोर

कलावंत आहू रहइं द्रव्यकाजे महामोहिमूली जतां केडि धाजे ।
प्रभो ! हउं तुहाऽरा कमा राग मारा न जाणउ कि माया पतीजउ सकारा ।

व्याख्या ।

[ जगन्नाथसेवाकर उ कोटनामी, मल उमानमाया नही के मुधाऽमी।
इस्या ध्यानतोऽराधरइ ! चित्तमोरासहीच्छां डिवा मा रसं चारदोरा ॥ ]

अहं उमायाः आनाः–प्राणाः शिवः, मां–लक्ष्मीं यातीति विष्णुः, आ–ब्रह्मा तान् । शशि 'लुगातोऽनापः' ( सिद्ध० २।१।१०७ ) इत्यत 'उमानमाया ।' न 'मले' न दधामि । किंरूपोऽहम् ? 'जगन्नाथसेवाकरः 'उः' पूर्त्यै । कोटः–कौटिल्यं तं नमयतीत्येवंशीलः 'कोटनामी ।' तथ 'ही' इति खेदे । 'के ?' कियन्मात्राः । 'अमी'–ब्रह्मादयः 'मुधा'–निष्फलाः तथा हे 'इस् !' कामविनाशक ! । 'हे अराधरइ !' अरे–दुःषमारूपे अधरे –हीनसत्वा यस्तत्र 'इ' इत्यनुकम्पकः । 'आध्यानतो' अर्थात् भवद्ध्यानं यावत् 'चित्तं' मनोयोगः । 'इच्छां' तृष्णाम् । रसं–रागं मा रत्–मा यासीत् कया ? 'ओरा' । उर्व्वै तुर्व्वै धातोः क्विपि ऊर्–हिंसा ईषत् ऊः ओः तया । किंविशिष्टया ? 'लिवा ' 'लिम्पति कर्मणेति । किंविशिष्टं चित्तं ओः–शिवस्य । आ–सामस्त्येन सहते इत्येवंशीलं 'ओरासहि ॥ २ ॥

[ कलावन्त आहू रह इन्द्र ! व्यकाजे ! महामोऽहिमूलीजताऽङ्केलिधाजे ! ।
प्रभोह उं तु हाऽरा कमारागमारानजाण उ किमाया पतीज उसनारा ॥

कलावन्तः 'रहः'–एकान्ते आहुस्त्वाम् इति । अर्थात् हे इन्द्र !– परमैश्वर्ययुक्त ! 'हे व्यकाजे !' विगतं अकं–दुःखम्, आजिश्च सङ्ग्रामो यस्य । 'हे अहिमूलीजत !' अहीनाम् ...

मयाऽह नही नाह ! ता माय ताय प्रभो ! वंदिया हेव नितु देवपाय ।
अहो ऊपमा नाथ ! तउ साररेहा दमउ भाविको पावना नाम केहा ॥

अवचूरिः ।

पवचित्स्तुकिता भीतत्वात्, इजता-कामसत्तेव यस्मात् सः । ततः संलग्न-विशेषणद्वयसम्बोधनम् । हे 'अङ्केढिघाजे !' अं-परब्रह्म तत्क्रीडाधारिका आजिः-समभूः । वयं त्वां महामः । तथा 'हे प्रभ !' प्रकृष्टा भा यस्य । 'हे अज !' हे 'अणो !' दृग्गोचराभावात् । उः-भर्त्सने । ऊं-ईश्वरम् । किं इत्याक्षेपे । 'आयापती '-महाविष्णू । 'हा ' खेदे । 'ऊहे'-विचारयामि । 'अराकमारागमारान् ।' अरा-शस्त्री तद्वत्या इव अर्कं-दुःखं, मारश्च-मरणम्, तयोः आगमो येभ्यः । आराः-अरिसमूहाः । कर्मधारयं, ते, तान् । तुः-अवधारणे । तथा यः कामो निलीय स्थितः स किंरूपः ? ईजः-लक्ष्मीनन्दनः । 'उमकारा' उम-ईश्वरविस्मयकः अत एव कारा-गुप्तिगृहम् । तद्धेतुत्वात्, विशेषणयुग्मम् । आयापती ईजे इत्यत्र अन्यमते न सन्धिः ॥३॥

[ मया स्तुनर्हीनाहतामायताय ! प्रभोऽवन्दि वाहेऽवनितुदेऽवपाय ! ।
अहो ऊपमा नाऽय त उ साररेहाऽदम उभाविकोपावनानाम ! केहा ? ॥ ]

'हे अवनितुदे वाहेऽवपाय !' अवनिः-जगत्त्रयभूः, अर्थात् तत्र स्थितान् तुदते-व्यथते इति अवनितुदे । 'वाहे' संसारप्रवाहे । कः-कीदृशस्त्वयाऽपायो-वपायः । न वपायो अवपायः तत्सम्बोधनम् । मया भवान् अवन्दि-स्तुतः । किंरूपः ? हीना-निन्द्या अहताश्च-केनापि पूर्वं अदृश्या अंना स्तनाः-स्त्रियः, स्तनाश्च ते अर्हीनाहतामाश्च तैः अयता-अयद्वा-आयस्य-लाभस्य प्रभा यस्य सः । 'अहो' इति विस्मये । 'उः' सम्बोधने । हे 'सारर !' सारं-ज्ञानादि रातीति-ददातीति वा । इह हे-तव ऊः-ज्ञानं तदुपमा नाऽस्ति । 'अय' इति प्रतिज्ञायाम् । यतस्त्वं उभौ इकोपौ-कामकोपौ अदमः-दान्तवान् । हे 'अनानाम !' अनाना-अप्राणा, अलक्ष्मीर्यस्मात् । केहा-इच्छा का-किंनाम्ना ? यदि तन्मूलौ कामकोपौ दान्ताविति ॥४॥

वहइ मान माया महामोह साह्या गमइ राग साचा रही लांवि वाह्या।
न को नां हतां सारतउ देव टाली न वेरउदही नेह तउ कर्म जाली॥
न वा मांगजे राजिनं काज केवा रुली नाथ! तउ वासना स्वामि! सेवा!
प्रभो! भंजिवा मोहना नाद पूरा मया छइं जितां लोभ एवारिवूरा॥६॥

अवचूरिः।

[वह इमा न माया महामोऽहसा ह्यागम इराग! साचार! हीलाऽऽम्बि वाह्या।
न कोऽनाहतासार! तु उदेवटाली न वेर उदहीनेहत उ कर्मजाली॥]

हे नाथ! इमाः माया न वहे। 'हिः' यस्मात्। अहसाः सन्तस्त्वां महामः। 'हिः' यस्माच्च। इला-भूः बाह्या, न त्वात्मनः। इति आम्बि-कथिता तत्त्वज्ञैरिति। हे अग!-निश्चल!। 'हे साचार!' आचारो-देशनादिः। तुः-पुनः। हे 'अनाहत!' महोदयप्राप्तत्वात्। 'हे सार!।' हे 'हे वेरउदहीन!' वेरे-शरीरे उत्-प्राबल्येन अहीन! कः त्वां अर्हन्तं न ईहते? किंस्वरूपः 'उदेवटाली' उदेवं-शिवं टालयितुं शीलं यस्य। अतो न कर्मजाली-कर्मजालमुक्तः, यत् उत्कृष्टकस्थितौ भगवदुप-लब्धिर्न। 'उः' पूर्त्यै॥ ५॥

[न वामाङ्गजेऽराजि नं काजकेवार्! उ लीनाऽथ त उवा सना स्वाऽऽमि सेवा।
प्रभोऽभञ्जि वामोहना नादपूरा मयाऽच्छ! इंजिता लोभ एवारिवूरा॥]

हे जिन! त्वयि वामाङ्गजे नं-ज्ञानं न अराजि? अपि तु अराजि। 'हे काजकेवार्!' कः-ब्रह्मा अजः-विष्णुः ईश्वरो वा, क-आत्मा, जातावेकवचनम् काजकं तस्मिन् वारं-अवसरम् सत्कर्मविधानायाऽऽ-चष्टे इति वारयतीति क्विपि वार्!। हे लीन!- लयप्राप्त!। अथ ते-तव सेवा आमि-प्राप्ता। किंरूपा? उवा-प्रीत्या सना-नित्यं स्वा-ऽऽत्मीया। हे प्रभो! भवता वामा-प्रतिकूला ऊहना-वितर्को अभञ्जि। किम्भूता? 'नादपूरामया' नादपूरो-वाग्जालं तदेवामयो यस्याः। हे 'अच्छ!'

न ही सामिनइं नामि ते ताम लागी रहइ राग वीरागमायावि भागी ।
अरे दोहिला माणुसा जन्मलंभो महारउ दया जीवतां मूढ ! दंभो ॥
नवी नवी तामइं देव वात भोगे स दोषी नवसातघात ।
विभो ! वली आपि न माम हाम पराभवइ नाह सवामकाम ॥८॥

---

अवचूरिः ।

अच्छा-निर्मला ज्ञानादिर्ई:-लक्ष्मीर्यस्य तत्सम्बोधनम् । त्वया लोभ एव लोभोऽपि भग्नः । 'एव' इत्यवधारणे । भग्नऽज्येव । किम्भूतेन ? इजिता-कामजिता । तथा 'अरिचूरा' अरीणां कः-दीप्तिस्तां उपैते-विनाशयतीति 'अरिचूरा' ॥ ६ ॥

[ नही छाऽऽमिन इनामितेताऽमला गी रह इरागवीरागमाऽयाविभागी ! ।
अरेऽद्योऽहिल्याऽमा न शाऽजन्मलं भो ! महार उदया जीवतामूढदम्भोऽ ! ॥]

हे आमिन इन !-रोगिणां सूर्य ! त्वयि अमिता-घना सा-लक्ष्मीः, अमला गीः-सरस्वती रहः-एकान्ते न इता-न प्राप्ता । अपि तु प्राप्ता । 'ही' विस्मये । किम्भूता सा लक्ष्मीः? 'इरागवीरागमा' इरायां-पृथ्व्याम्, अगः-सूर्यः तद्वद् ये दीप्ता वीरास्तेषां आगमः-प्राप्तिर्यस्याः सा । पुनः किंरूपा ? 'अयाविभाक्' 'अयां-अलक्ष्मीम् विभजते-दूरीकरोति । अथवा अयं-अनुकूलं दैवं न विभजते । 'ई' सम्बोधने । किंरूपा गीः ? इरायां-वाण्यां भाषणे भगवद् वीरा-निश्चला आगमाः-सिद्धान्तास्तेषां आयं-लाभं न विभजते । अथाऽयं भगवत उपदेशः । अरे मूढ ! अदः-प्रत्यक्षोपलभ्यमानेन दैवेन इति शेषः । अमा-सह अहिल-न द्यायं कुरु । यतः अदः स्त्रैणं 'शाजन्मलं' शा-लक्ष्मीः जन्मापि च लाति-ददाति । भो ! 'उदया !' उत्-प्राबल्येन अयः-अनुकूलं दैवं येषां ते । महान् अरिसमूहो महारः-रागादिर्जीवताम् । किम्भूतः ? 'ऊढदम्भः' प्राप्तकपटः । अक्षरः पूर्वं ॥ ७ ॥

[ नवीन ! वीताव इदेवनाऽभोगे ! ऽपदोषीनवसातघात ! ।
विभो ! वलीआपि न मामहाम पराभव इनाहसवामकाम ! ॥ ]

सुखज्जूरलुंदे भरी भूरि भाणां न वा माप थीणां तिहां घी नमाणां
नवी द्राप साकर सुमुंडी मरुक्की रगइ दाढए जीभ ! रे तुं फुरक्की

अवचूरिः ।

नवीनः–नवस्तवः तद्वन्तो नविनः तेषां इनः–स्तुत्यानामपि स्वामीति । हे 'इदेववातभोगे !' इदेवः–कामदेवः स एव वातभोगः तत्र भोगः–सर्पः भोगसर्पः पिण्डः स एव ईः–लक्ष्मीर्यस्य । 'हे असदीधीनवसातघात !' सत्–सत्यम्, ई–सम्पत्, धीः–बुद्धिः नवं सातं–सौख्यं चेति सदीधीनवसातानि । न विद्यते सदीधीनवसातानां घातः–अन्तो यस्मात् तत्सम्बोधनम् । त्वं 'वीतामो' गतरागोऽसि । अत एव हे विभो ! मया भवान् वली आपि–प्राप्तः । ततः हे इन !–नाथ ! हे 'अहसवामकाम !' न विद्यते हसं वामश्च कामः–अभिलाषः यस्येति तत्सम्बोधनम् । 'अह पूजायाम्' अहां मां–संयमादिलक्ष्मीं न आम–न प्राप्तः । अपि तु प्राप्तः । किंरूपोऽहम् ? पराभवः–पराणां–वैरिणां अभवो–असत्ता यस्य सः ॥ ८ ॥

[ सुखज्जूरलुन्दे भरी भूरिभाणां, नवाऽमाऽपथीणान्ति हाऽङ्गी न माणाऽम् ।
न वीद्राख ! साकरसुमुण्डी मरुक्की रगइ दाढए जीभ रे तुं फुरक्की ॥]

हे 'भूरिभ !' बहुप्रभ ! भवान् परब्रह्म आण–कथयामास । किंरूपम् ? 'सुखज्जूः' सुखमिवाचरन्तीति सुखन्तः–विषयाः जूर्यन्ते–क्षीयन्ते यस्मिन् तत् । किंरूपो भवान् ? अलते–समर्थो भवतीत्यल् । क्व ? 'उन्दे' क्लेदने, कठिनानामपि आर्द्रीकरणे । 'भरी' अतिशयवान् । हे 'नव !' न कदापि जीर्ण इति । त्वया अमा–अलक्ष्मी. आन्ति–बद्धा 'अतु बन्धने' । किंरूपा अमा ? 'अपथी' सन्मार्गरहिता । तथा अणा–निष्फला । तथा हे नाथ ! अहं अं–अर्हन्तं त्वां आण–आजगाम । 'अः स्यादर्हति सिद्धे च. विष्णौ' ( ) इति वचनात् । किंरूपोऽहम् ? 'हा' विस्मये । विस्मयं अङ्गते–गन्तुमारभते

यः खलु दण्डादिक्रियाक्षमः स प्रभुरित्यतस्तदाह—

करंवा भरी आटना थाट वाघा चक्ल के करी ताम तंबोल लाघा ।
सुआली तिहां सेज तां पाथरावी सुयउ वायनी लहरि तु फार फावी ॥

अवचूरिः ।

इत्येवंशीलः अङ्गी । किम्भूतं अम् ? 'इनम्' । विगता ईः-लक्ष्मीः येषां ते व्यो-निर्धनाः । न चीनां द्राक्षः-शोषणं यस्मात् सः । यतस्त्वं 'साकरसुमण्डी-' सायाः-लक्ष्म्याः आकरः अत एव सुष्ठु मण्डते-आश्रितमित्येवंशीलः । विशेषणयुग्मम् । 'मदक्की' मः-चन्द्रः तद्रुचः ताः किरति-विक्षिपतीति 'मदक्की' अतिसौम्यत्वात् ॥ ९ ॥

[ रुच्याम्भोजनस्वामिनिनाऽऽमिपाम्यां, मयाद्द्वि...... ।
.................................... ॥ १० ॥]

प्राप्य रुचिः-कान्तिरेव । आ-सामस्त्येन अम्भो यस्य स रुच्याम्भाः, कान्त्या वपुषि जललहरिवल्लक्षमित्यर्थः । जनानां-लोकानां स्वामी जनस्वामी-राजादिः, रुच्याम्भाश्चासौ जनस्वामी च रुच्याम्भोजनस्वामी तस्य सम्बोधनं हे रुच्याम्भोजनस्वामिन् ! 'इन !' जातावेकवचनमत्र, जनस्वामिनामपीत्यर्थः । हे 'आमिप !' 'आमिनः-रोगिणः तान् पातीति । हे 'अम्यां !' 'अम् शब्दविभक्त्योः' इति धातोः अम्यं-कथनीयम् अं-परब्रह्म यस्य इति । केवलं तत्त्वमेव वाच्यमस्येति भावः । मया अमा-अलक्ष्मीः आद्धि-उल्लङ्घिता अतिक्रान्ता इति यावत् । त्वयि उपात्ते श्रीः-प्राप्ता, अश्रीस्त्वतिक्रान्ता इति युक्तं त्वदुपादानमिति वृत्तमपद्यार्थः ॥ १० ॥

[ करं वा भरी आरनाऽयाऽऽट वाधावल्लके करीतामतुम्बो रराधाऽ ।
सुयालीतिहासेजतापाऽप रावी सुय उयाऽय ! नील ! हरितुम्फाऽऽरप्ऽऽवी ॥]

अवचूरिः ।

हे 'ईत्राटन!' ई–लक्ष्मीं त्रायते इति ईत्रं–लक्ष्मीपालकं अटनं–विहारो यस्यासौ तत्सम्बोधनम् । भगवद्विहारे सपञ्चविंशतियोजनशतान्तः ईतिवैरिमारिदुर्भिक्षस्वपरचक्रभयाद्यभावात् जनाः परमसम्पदः सञ्जायन्ते इति युक्तमेतदामन्त्रणम् । भवान् करंवा 'वा' उपमानार्थः । करमिव करं–प्रायश्चित्तदानादि 'आट'–जगाम । 'अथ' इति अधिकारार्थे । यो यदधिकारं अशुभं आचरितवान् तस्य तदधिकारकरं प्रायश्चित्तरूपं कृतवानित्यर्थः । किंविशिष्टो भवान्? 'भरी' अतिशयवान् । तथा 'बाधाऽचल!' बाधनं बाधः-शीतोष्णादिपीडा तेन न चलति–न क्षुभ्यतीति बाधाचल्! । अयमुपनयः । यो निजजनपदसम्पत्पालनाय दिग्विजययात्रापरायणः स्वप्रतापातिशयत्रासितद्विषद्गणः शीतोष्णक्षुत्पिपासाद्यनातुरः सम्यग् न्यस्तन्यायानुसारिकरः स एव खलु प्रभुः । इति, स एव च सर्वतो वर्द्धते इत्याह । 'अ' इति सम्बोधने । हे प्रभो! भवान् रराध–ववृधे । 'राधृ च् वृद्धौ' इति धातोः रलयोरैक्यम् । रलयोर्डलयोः, क्वचिच्छसयोः' ( ) इति वचनात् । कस्मिन् मध्ये? 'ऊले' उवं–दीप्तिं लाति–गृह्णातीति ऊलो–दीप्तिमान् जनस्तन्मध्ये भवान् वर्द्धते स्म । अक्षयपदप्राप्त्या महोदयभाक्त्वात् । किं रूपः सन्? 'करीतामतुंवः' करिणो–हस्तिनः तद्वद् इताः–प्रबलगर्जिततया जाता आमाः–सन्निपातादयो रोगाः तेषां तुम्बो–विनाशो यस्य स 'करीतामतुम्वः' । 'तुवण् तुवण् अर्दने' इति तुम्वनं तुम्वः । तथा हे 'असेजताप!' ईजः–कामः तस्य ताप ईजतापः । ईजतापेन सह वर्तते इति सेजतापो, न सेजतापः असेजताप स्तस्य सम्बोधनम् । हे 'अय!'–अनुकूलदैव! त्वमेव अनुकूलं दैवं नाऽन्यदित्यर्थः । हे 'नील!' नीलवर्णत्वात् । हे 'हरितुम्फ!' हरिं–मृत्युं तुम्फति–हिनस्तीति हरितुम्फः। अजरामरपदप्रदायित्वात् । अथेति माङ्गलिक्यार्थे । त्वं उवा–दीप्त्या 'आवी' अः–कृष्णः, अविः–सूर्यः तौ आरफ–

अथ भगवद्गुणस्तुतावलसायाः स्वीयरसनाया उपदेष्टुमित्याह—

एवली न रसना मिन ढोके पासनाह हीयडा मन मूंके ।
एक एकहतकोप भमाडो मेरुतुंग गुरु वाणि सुमाडो ॥ १२ ॥

अवचूरिः ।

व्याप्नोषि । 'घर्फ रफ' इत्यादि 'रफ' गत्यर्थो धातुः । आडा सह व्याप्त्यर्थः । आङोऽभिव्याप्त्यर्थत्वात् । अयमर्थः । यद् विष्णुः पालकः सूर्यः प्रकाशक इति तत्तद् गुणव्याप्तिरिति । किंविशिष्टस्त्वम् ? 'सुयाली' सुः-पूजायाम्, सुरासुरैः पूजिता यां-तीर्थाधिपत्यलक्ष्मीं अलते-भूषयतीत्येवं शीलः 'सुयाली'। सु-अतिशयेन यां-समवसृतिलक्ष्मीं अलतीत्यादिना वा सुयाली इति । 'ह' इत्यागमे । सिद्धान्ते हि तीर्थकरश्रीरतिशयेन वर्ण्यत इति । तथा 'रावी' रावः-शब्दो-धर्मस्य भाषणं विद्यते यस्य स रावी । तथा सुयः सुष्ठु-शोभनं अर्थात् मोक्षं-सर्वोत्तमं वस्तु याति-व्याप्नोतीति एधदशपदार्थः ॥ ११ ॥

[ एव लीनरसनामिन । ढोकेऽपासनाह ! हीयडाऽऽमन मूंके ।।
एक एकहतकोपभमाडी मेरुतुङ्ग गुरुवाणी सुमाडी ॥ ]

हे इन !-स्वामिन् ! हे 'अपासनाह !' अपासनं-मरणं आ-समन्तेन नाशयति-त्याजयतीति 'अपासनाह !' शाश्वतपदप्रदत्वात् । अहं 'लीनरसनां प्रति ढोके' लीनेव लीना-आलस्यान्नुकितेति यावत् । लीना चासौ रसना च लीनरसना तां तव स्तवाय प्रगल्भयामि इत्यर्थः ॥ 'एवः' अवधारणे ।. व्यवहितोऽपि क्रिययोपयुज्यते । ढोके एवेति । कि रूपोऽहम् ? एकः-अद्वितीयः, संसारे सर्वदा अपि एकाकित्वात् । अथवा एकः-श्रेष्ठः, योऽर्हन्तं लब्धवान् स श्रेष्ठः इति । तथा 'एकहतकोपभमाडी' हता कोपस्य भा-प्रभा यया सा हतकोपभा । एका-केवला । एका च

इह स्तुतिपरिसमाप्तौ यत् स्वामिनो विज्ञप्यं तदाह कविः—

इसी भावभोली कही नाह मोरी करउ वीनती रंगतउ सफल धोरी ।
दयालू न वा मारभावारवारी करे वीरहीरोपिते सारसारी ॥ १३ ॥

---

अवचूरिः ।

हतकोपभा च एकहतकोपभा एवं विधायै मायै—शमलक्ष्म्यै अड ति—उद्यमं कुरुते इत्येवंशीलः । 'परतः स्त्रीपुंवत्०' (सिद्ध० ३।२।४९) इत्यादिना पुंवद्भावात् ह्रस्वत्वे एकहतकोपभमाडी । पुनः किंरूपोऽहम् ? 'मेरुतुङ्ग-गुरुवाणिसुमाडो' मेरुतुङ्गगुरूणां-श्रीमदञ्चलगच्छाधीशश्रीमेरुतुङ्गसूरीन्द्रगुरुपादानां वाणि—वाणीं सुष्ठु—अतिशयेन मलते—धारयतीत्येवंशीलः । तेषां शिष्यलेशत्वात् गुरुवचनधारणत्वात् सकलश्रेयोऽवाप्तिरिति । गुरुमन्तरेण चार्हद्भट्टारको दुराप इति युक्तं निजगुरुनामग्रहणम् । तद्वचनधारणं च । रसना अलसा सती भगवतः स्तुतौ कथं उत्साहिता ? इति तदाह—

हे मूके ! 'हि' स्फुटम् । अड—उद्यम कुरु, कथमलसा सती तिष्ठसि ? । 'हियड' इत्यत्र 'इवर्णादे०' ( सिद्ध० १।२।२१ ) इत्यनेन अग्रे यत्त्वं दधियेतत्, मधुवेतत् इति वचनात् । तथा हे मूके ! आमन-वद, कथं मौनमाधाय तस्थुषी ? इति द्वादशपद्यार्थः ॥ १२ ॥

[ इशीभाविभोऽलीकहीन ! अह मोरीकर उवीनतीरङ्गत उ सफल ! धोरी ।
दयालूनवामारभावारवारी करे वीरहीरोषिते सारसारी ॥ ]

'अह पूजायाम्' हे अलीकहीन !—हे असत्यरहित ! मा ऊरीकुरु —मां स्वीकुरु । सेवकतया इत्यर्थः । किंस्वरूपस्त्वम् ? 'इसीभाविभः' 'शीभृङ् वीभृङ् शल्लि कथने' शीभनं शीभा 'क्तेऽटो०' (सिद्ध० ५।३।१०७ ) इत्यः । इशीभा-कामकथा तस्या न विद्यते विभा यत्र सः, इशीभाविभः । शसयोरैक्यम् । 'क्वचिच्छसयोः' (

अवचूरिः ।

इति वचनात् । तथा अव ' उवीन ! तीरङ्गतः !' कः-प्रीतिः, आ-ईषत् कः कुः तस्याः स्वल्पप्रीतेः, उवि-वृद्धिविषये इन !-स्वामिन् ! प्रभो ! क्षम इति यावत् । ' तीरम् ' संसारसागरपारं गतः-प्राप्तः, 'उः' सम्बोधनार्थः । तथा हे सफल ! । धोरणं धोरः-गतेश्चातुर्यं स विद्यते यस्यासौ 'धोरी' गजगतित्वात् । ' डुकृञ् करणे ' इति धातोः प्रकृतेर्यथा उप्रत्ययस्तथा शिवप्रत्ययोऽपि । एवमुक्तत्वात् ' उरीकर उवीन ' इत्यत्र एवं सन्धिः । अउ माडीति पदेन उरीकुरस्थस्याकारस्य उकारे लुक् । ततः ' करीकरो ' इति रूपम् ' ओदौतोऽवाव् ' ( सिद्ध० १।२।२४ ) इति पदेन निमित्तभूतेन उवि उ करीकरो उकारस्य अव् ' स्वरे वा ' (सिद्ध० १।३।२४ इति वलोपः इति सिद्धं करीकर उवीति । 'अह' इति पूजार्थो मङ्गलार्थे स्तुतिपरिसमाप्तौ गृहीतः । स्वामिना स्वीकृते यज्जातं तदाह-दयया लूनाः-छिन्ना वामाः-प्रतिकूलाः क्रूरदृष्ट्यादिना आरभावाः-क्रूरग्रहमङ्गलरूपाः अरयो-वैरिणो यया सा दयालूनवामारभावारिः । एवंरूपा वारी-सरस्वती 'वारिर्घट्यां सरस्वत्याम्'

( हैम्यने० का० २. श्लो० ४४४ )

इत्युक्तेः । सा सर्वजनप्रसिद्धा ई-लक्ष्मीः करे-हस्ते उषिते-वसतः स्म, हस्तगते सञ्जाते इत्यर्थः । किंरूपा लक्ष्मीः ? ' आरसारा ' अर्णां समूह आरः तं सारयति-निर्गमयतीति आरसारा । ममेति शेषः । विषमहेतुषु द्व्याश्रयादिषु क्वचित् क्वचित् साध्याहारवचःप्रयोगदर्शनात् इह क्वचित् तत्प्रयोगो न दोषाय इति । यदि भगवान् प्रसन्नस्तर्हि लक्ष्मीसरस्वत्यौ हस्तगते स्यातामिति किं चोद्यम् ?। ' वीरहीर ' इति जिनसम्बोधनम् । वीरेषु-सत्पुरुषेषु हीरः-वज्ररत्नम् ॥

इति त्रयोदशपद्यार्थः ॥ १३ ॥
इति समर्थितः स्तुत्यर्थलेशः ॥

[ ३२ ]

श्रीपूज्यश्रीजिनभद्रसूरिशिष्येण सिद्धान्तरुचिना कृतं
गुप्तभेदाद्यलङ्कृतं

## श्रीजयराजपुरीशश्रीपार्श्वजिनस्तवनम् ।

शश्वच्छासनवैरिदानववधूवैधव्यदानोद्गतं
गीतं किन्नरकिन्नरीभिरभितो यस्य प्रतापं मुहुः ।
श्रुत्वा तेऽपि कुलाचलाः परिलसन्नीलप्ररोहच्छलाद्
रोमाञ्चं दधते स मे जिनपतिः श्रीआश्वसेनिः श्रिये ॥ १ ॥

यन्नाममन्त्राक्षरजापलेशाद् भव्या भवन्त्येव चिरं महेशाः ।
तं गुप्तभेदैर्भुवनाभिरामं श्रीपार्श्वनाथं विनुवामि कामम् ॥ २ ॥

परेभ्यो जिनेभ्योऽपि वृद्ध्यै जिनेशास्त्वदालोकनोत्काधिकं स्याद् विशिष्यां
न पूर्णोऽपि वार्णोऽधिरिंदूदयार्थी न वेलाग्रहार्थे न वेलासु भूयात् ॥३
[ कर्तृगूढम् ]

तदा मन्दरं गत्वरायुर्जनस्ते स्तुतेस्तात ! चेच्छित्तिविच्छित्त्यतुच्छः ।
न किं चात्र दारिद्र्यमुद्रादरिद्रो भवेन्निर्धनः कामधेनुप्रधानः ? ॥ ४
[ कर्मगूढम् ]

प्रसीद देवात्मपदाश्रयं श्रिया त्रिलोकलोकेतरलोकितस्थिते ! ।
त्वदेकरागस्य ममेदमान्तरं कदापि किं योजयितुं त्वमर्हसि ॥ ५ ॥
[ करणगूढम् ]

विदेकचित्तं चरितोच्च ! चारुचारित्र ! चक्षुर्विषयीकृतस्त्वम् ।
मां मुक्तिकान्तस्पृहयालुमेव त्रायस्व विश्वेश्वर ! विश्वमूर्त्ते ! ॥ ६ ॥
[ सम्प्रदानगूढम् ]

कृता देव ! वामासुवस्ते स्तुतिर्यैर्न भूतं भयं भूरिभव्येषु तेषु ।
तदन्तर्गतं लोलचक्षुःकटाक्षैः क्षतं वीक्ष्य किं मामुपेक्षां करोषि ? ॥७॥

[ अपादानगूढम् ]

भवेतां पदौ सर्वदौ सर्वदा ते स्तुतौ तात ! सैषा स्तुतिस्ते न सम्यक् ।
यदेते न रोगं न चानिष्टयोगं न चेष्टैर्वियोगं लभन्ते कदापि ॥८॥

[ सम्बन्धगूढम् ]

जिन ! रुचिरमणीनां भूषणानां भरेणाभिनवलवणिमाब्धेऽप्रस्थितेनास्पदेन।
तव चरणनखानां नाकिनायेन नम्रोन्नतमुकुटगलच्छोणाश्मनां मोह ऊहे ॥

[ आधारगूढम्]

येन ते चरणपर्युपासिनाऽभावि भाविशिवभूविलासिना ।
तेन सा त्रिजगती स लोचना लोचना किमपरास्तशोचना ॥ १० ॥

[ सम्बोधनगूढम् ]

पर्वतात् धीरिमाधारो गम्भीरो वारिधेरपि ।
दानशौण्डोऽम्बुदेभ्योऽपि देवो वश्चित्तचिन्तितम् ॥ ११ ॥

[ क्रियागूढम् ]

आनन्दरोऽरुचिरपातककूटकालः क्षिप्तस्त्वयावनतदेव ! नयाश्रितस्त्वम् ।
किं पूर्यते मम स तेन गुणोर्मिमालिनोवैरितवसति यो भजते हितात् त्वाम् ॥ १२ ॥ [ सप्तकारककसम्बोधनैकक्रियादिकर्मगूढम् ]

ये भजन्ति नियतं त्रिकालवित् त्वां नवात्मभिमतांस्तनोषि किम् ।
देव ! सेवकमिमं विशालयं किं निभालयसि नो भवालयम् ॥ १३ ॥

[ पादगूढम् ]

नाथ ! ते पदपयोजदर्शनं पूर्वपुण्यविभवेन यो जनः ।
दर्शनं सुपदताप नाथते पूर्वपुण्यविभवेन तासु न ॥ १४ ॥

[ द्विपादगूढम् ]

सन्दोहापोहकारी मदमदनगजे केशरी सारवाक्यो
निर्वाणं सम्प्रयातो वृजिनगणभवामापदां पिष्टिसज्जः ।
यो नित्यं वन्द्यमानः सुरनरविसरैर्नागचिन्हः परध्नो
नन्द्याद् व्याधिप्रमन्था मुकुरसममुखः पार्श्वराट् कृष्णतेजाः ॥१५॥

[ श्लोकगूढम् ]

श्लोकश्चायम्—

संसारवासनिर्नाशकरणं परमं जिनम् ।
यो वन्दते सकृदपि स निधिः सुखसम्पदाम् ॥ १६ ॥

इत्थं मया कम्रकवित्वपङ्क्तिकर्पूरपूरैर्महितः सुयुक्तिः ।
जीरापुरीशः सुखमातनोतु स्वकीयसिद्धान्तधियं धिनोतु ॥१७॥

॥ इति गुप्तभेदैः श्रीजयराजपुरीशपार्श्वजिनस्तवनम् ॥

कृतं श्रीपूज्यश्रीजिनभद्रगणिशिष्येण पं०सिद्धान्तरुचिगणिना ।

---

[ ३३ ]

श्रीजयराजपल्लीमण्डन-

## श्रीपार्श्वजिनस्तवनम् ।

( शर्मस्तवाऽपराभिधानम् )

+शर्म प्रयच्छ सुदशर्म तदेव शर्म शर्मद्यसारविदशर्मवितानशर्मन् ।
शर्मप्रभासितसुशर्मनरेशशर्म शर्मप्रनिर्मितसुशर्मपुरेशशर्म ॥ १ ॥
शर्मव्यसन्नतकुशर्मदद्दशर्म शर्मज्जनास्तकुदशर्मलसद्दशर्म ।
शर्ममभेदकुलिशर्महिमालिशर्म शर्मव्यनिर्मितदिशर्म यशोमृशर्म ॥२॥
शर्म श्रियोऽस्मि कुलशर्म च जातिशर्म शर्म श्रुतस्य चलशर्म च कीर्तिशर्म ।
शर्म प्रियस्य सुतशर्म कलत्रशर्म शर्मप्रमुख्यजनशर्मद्भेन्यशर्म ॥ ३ ॥
शर्म प्रसिद्धहरिशर्म सयज्ञशर्म शर्मप्रभूतगुणशर्म ससोमशर्म ।
शर्म प्रशस्य जयशर्म सदेवशर्म शर्मप्रणूत जयशर्मपुरस्थशर्म ॥४॥
शर्मप्रदः सकलशर्मकरोऽस्तु शर्म शर्मप्रकाश्यमलशर्मकृतेऽस्तु शर्म ।
शर्म प्रयो प्रथितशर्म नुमोऽस्तु शर्म शर्मक्षमाशिपि सशर्म....शर्म॥५॥
शर्मत्वदा विदुरशर्म पशावशर्म शर्मत्वशर्म तरशर्मतमित्विशर्म । ‥
शर्म प्रभारदिनशर्म वदायिशर्म शर्मत्वकाम्ययनशर्म सुखानि शर्म ॥६॥
शर्म प्रभो ! प्रियमशर्म न किंत्वशर्म शर्मश्रियो नृपतिशर्म सुरेन्द्रशर्म ।
शर्मप्रधानतमशर्मद मुक्तिशर्म शर्मत्वभागसदशर्मद देहि शर्म ॥ ७ ॥
शर्मचन्द्रसदशर्मद्द यास्यशर्म शर्मच्छिदा कुसुमशर्मदनादिशर्म ।
शर्मस्यमृज्जलधिशर्मणि नेत्रशर्मशर्मस्युपास्य शुभशर्मरकायशर्मन् ॥८॥

+ दृत्याद्यभावात् दुष्करः पदच्छेदः ।

शर्मप्रदानिशमशर्मवतामशर्म शर्मन्ननन्त तमशर्म शिवस्थशर्मन् ।
शर्मप्रराहि सुरशर्म मनुष्यशर्म शर्मप्रमोच्य भवशर्म तदाश्वशर्म ॥९॥
शर्म श्रितातुलमशर्म ममानुशर्म शर्मप्रथावितमशर्म मनःकुशर्म ।
शर्मक्षयि प्रतनुशर्म वहाप्यशर्म शर्मत्विदं हि शिवशर्म नुवेत्य शर्म॥१०॥

इत्थं श्रीजयराजपल्लिनगरीसीमन्तिनीशेखरः
श्रीमत्पार्श्वजिनेश्वरः सविजयप्रौढप्रभावाकरः ।
शर्मप्रौढपदत्रिरूपकलिताद्यन्तान्तरालाखिल-
प्रोल्लासिक्रमवृत्त....विनुतः सम्पद्यतां शर्मणे ॥११॥

---

[ ३४ ]

श्रीमहेन्द्रसूरिसूत्रितं-
श्रीजीरिकापल्लीतीर्थालङ्कार-
## श्रीपार्श्वनाथस्तवनम् ।

---

प्रभुं जीरकापल्लिवल्लीवसन्तं लसद्देहभासेन्द्रनीलं हसन्तम् ।
मनःकल्पितानल्पदानैकदक्षं जिनं पार्श्वमीडे कलौ कल्पवृक्षम् ॥१॥
बुधा रत्नभूताः सुधासारवाचः क्व ते मन्दधीः क्वाहमेषोऽल्पकाचः ।
तथापीश ! भक्तिस्तु मां मौनमेषाऽधुना मोचयत्येव मान्त्रीव लेषा॥
बुधानां गिरस्तुष्टुवुर्यं महार्था ममाज्ञस्य कास्तत्र चैता अपार्थाः ।
विहायोऽध्वना येन वा वैनतेयः प्रयातः स किं चाटकैरेण हेयः ?
पुरा भूषणे दूषणे निर्विशेषा परिस्पृश्य मिथ्यात्वमातङ्गमेषा ।
मतिर्मे जिन ! ध्यानतीर्थेषु शान्ताऽधुना स्नातु शुध्यै सतीवातिकान्ता॥

कुदेवान्तराणां कृता चाटुदाऽऽशी रसज्ञे! रसज्ञाऽपि किं वञ्चिताऽऽसीः ।
तव क्षारनीरैर्यतो नो पपाथ त्वमग्रे सुधाभं जिनस्तोत्रपाथः ॥ ५ ॥
क्षमासिन्धुरेकोऽपि निर्द्वन्द्वभावस्त्वमेवारुणः सप्रतापप्रभावः ।
अमित्रं जगज्जैत्रमुर्वीशमोहं तवार्हन् ! स्तवायाभवं मागधोऽहम् ॥६॥
शिवश्रीकृते त्वद्विना वीतरागान्महेत् कः सुधीरन्यदेवान् सरागान् ।
अपास्यामृतं कोऽत्र वा तृट्छिदाऽले पिबेदारनालं दहत्कण्ठनालम् ॥
नमस्ते विभो ! विश्वविश्वैकभर्त्रे नमस्ते समस्तापदापातहर्त्रे ।
नमस्ते चिदानन्दकन्दाम्बुदाय नमस्ते गुणातीतसङ्ख्याबुदाय ॥ ८ ॥
नराः किन्नराश्चामरा यस्य सेवाममी कुर्वतेऽखर्वगर्वा न के वा ।
धुताः सम्पदः स्वं पदं याचमानाः प्रसादे सदापीशितुः सावधानाः ॥
गराध्मातदर्पाः प्रसर्पन्ति सर्पा न मर्माविधो भूभुजां वावसर्पाः।
निबद्धावनीविग्रहाः कुग्रहा वा घनोच्छृङ्खला नो खला दुष्टभावाः ॥१०॥
स्फुटं चौरिकावृत्तिशूरा न चोराः क्षुधाग्रस्तलोकाः समा नापि रोराः ।
यमस्यैव दूताः प्रभूता न भूता न देहेऽपि रोगाश्चिरं वाऽनुभूताः ॥
मदोन्मत्तकोपोद्धुराः सिन्धुरा वा न च व्याघ्रसिंहा महाघोररावाः ।
न दावानला भूरिजिह्वाकराला न वाऽऽतङ्कदा वार्द्धिकल्लोलमालाः ॥
महाकोपकालानला भूमिपालाः सशस्त्रा न योधाः कलौ भीमसालाः ।
पुरुस्तस्य पीडाहराः शुद्धवर्णा विभो ! येन जप्ता भवन्नामवर्णाः ॥
चतुर्भिः कलापकम् ।
तदेकत्र वामोदररयेन देव ! त्वया राजिता रत्नगर्भा नवेव ।
यतस्त्वत्समं क्वापि पुण्यं न माला पुरासूत पुत्रं पवित्रावदाता ॥१४॥

---

१ स्तवायाऽभवं नाथ ! हे मागधोऽहं । इति भाति ।

पुरी स्मेव हर्षान्नरीनर्त्ति काशिर्भवज्जन्मनि प्रस्फुरत्सौधराशिः ।
चलद्वैजयन्तीकरैर्मन्यमाना कृतानुग्रहं पावनं स्वं समाना ॥ १५ ॥

धराधीश्वरस्याश्वसेनस्य गेहे त्वयीशागते पुण्यलावण्यदेहे ।
सुदीपोत्सवोऽदीपि माङ्गल्यरूपे जने विश्वरूपे सदोद्योतरूपे ॥१६ ॥

ग्रहाः कौतुकेनेव यद्द्रष्टुकामा ययुः स्थानमुच्चं समस्ता अवामाः ।
क्षणे जन्मनो ज्ञानलक्ष्मीसनाथः शिवं मे स दध्याज्जिनः पार्श्वनाथः ॥

पपौ स्तन्यमन्यार्भवत् यो न मातुः स्मित एव सा तेन सम्प्रीणिता तु ।
ययौ वृद्धिमङ्गुष्ठपीयूषपोषैः शिशुत्वे फलैश्चामृतैरस्तदोषैः ॥ १८ ॥

क्षमायां द्विधा मन्दमन्दं दधानं पदं वीक्ष्य मातापि यं सावधानम् ।
हृदीदं दधौ जङ्गमः कल्पवृक्षः कथं मेऽङ्गणेऽसौ नमद्देवलक्षः ॥१९॥

विभुः शैशवे हेलया नागराजं ज्वलद्वन्हितोऽमोचयद्दाहभाजम् ।
कृपालुश्च यः प्रापयामास ऋद्धिं स मे पार्श्वनाथः क्रियात् कार्यसिद्धिम्॥

क्षमोऽपि प्रभुर्यौवने राज्यभारं वितृष्णो न शिश्राय जानन्नसारम् ।
किल ज्ञानवान् यो महानन्दलुब्धः कथं सोऽल्पऋद्धचा भवेद् विप्रलुब्धः॥

व्रतियोषितां रूपतो या घृताची निरस्ता समस्ताऽपि चाशापिशाची ।
त्वया मोहमल्लं पराजित्य देवाऽनिशं तेन मे त्वत्पदद्वन्द्वसेवा ॥२२॥

कथं प्राणिति प्राणवन्मोहजेतुः पुरस्ते स लोभद्विषस्तस्य केतुः ।
हते वा नृपे सेवकस्तत्सपक्षः किमु स्यात् प्रभूणां न वध्यो विपक्षः ॥

गृहे सुव्रतोऽपि व्रतं यद् त्वमीशाग्रहीरत्र हेतुं तु के वक्तुमीशाः ?
परं वाक्यदर्श्यैवमाचार एष त्वया भाविनां भाविनां लब्धरेषः ॥२४॥

कलौ नाम शैले सरः कुण्डमस्ति स्वयम्भूर्भवांस्तत्तटे स्माविरस्ति ।
तदासन्नभूपालभक्त्येति चित्रं पवित्रं च तद् वेद कस्ते चरित्रम् ? ॥
तडित्पातघातस्फुटच्छैलशृङ्गास्तरत्तूलनीला लुठद्ग्रावशृङ्गाः ।
अदभ्राभ्रगर्जाहतप्राणिताशाः स्फुरद्दुर्दिनासाररुद्धाखिलाशाः ॥ २६ ॥
तवांहोमठाः कामठा वारिवाहा न निर्वापयामासुरापूर्णवाहाः ।
स्वचेतोऽभ्रकागारगं ध्यानदीपं भजन्तं चिदानन्दसौख्यं समीपम् ॥
यदूर्ध्वं फणाः सप्त नागाधिराजः स्फुरद्रत्नचूडा वभुर्भक्तिभाजः ।
विजित्येवतान्नारकान् दुर्गमारीन् सदीपा ध्वजा उच्छ्रिता दुर्गमारीन् ।
वियोर्यन्महो यच्च वा चण्डभानोर्मणीनां तु यच्चाविरासीत् कृशानोः ।
अहो यन्महो ज्योतिषां विश्वभर्त्तः ! स सर्वोऽपि ते ज्ञानतेजोविवर्तः ॥
भवाम्भोनिधौ कर्मणां भीतिभीतस्तवाज्ञान्तरीपं हि पुण्यादभीतः ।
कृपालो ! नृपालोकमार्गाच्वनीनं ततो मामवाऽनाथमेनं सुदीनम् ॥३०॥
त्वया देव ! जिग्ये पुरा यस्तपस्वी सकोऽनङ्गवीरोऽधुना किं तरस्वी ?
महामोहराजो बले जायते न तृणेढि श्रितानाशुगैस्तेन तेन ॥ ३१ ॥
समाधिं निधिं हे मनस्त्वं गृहाण स्वदोर्गेत्यदुःखं समस्तं मुषाण ।
अनङ्गादिनागैर्नभोनीलिमाभैः सदा रक्षके पार्श्वनाथे च मा भैः ॥३२॥
तवास्याम्बुजे यो मनश्चञ्चरीकः पपावाधिवात्याभरात् कान्दिशीकः ।
कृणेहत्य लावण्यपीयूषपूरं स कृष्णोऽप्यतः श्वेतपक्षोऽस्तदूरम् ॥३३॥
ज्वलत्क्रोधदावानलं मानगोत्रं छलाशापिशाचीकुलाकीर्णगोत्रम् ।
महालोभदुःपूरगर्त्ताकरालं रसोत्तालपञ्चेन्द्रियव्यालमालम् ॥३४॥
महामोहपल्लीशशोकादिभिल्लं तमस्तल्पसङ्कल्पजल्पाच्छभिल्लम् ।
कलिश्चाद्वरामाशिवाघोररावं रटच्चाटुवाचाटदोषाटदावम् ॥ ३५ ॥

परिभ्रम्य भीमं भवारण्यमापं सरस्वत्युपान्तं विभो ! ते दुरापम् ।
अपामागमं चामृतं यद्दरीयस्ततो मे पदं निर्वृतेर्नो द्रवीयः ॥३६॥
सुधावर्षिणी वक्त्रचन्द्रप्रभा ते सदा भासमाना स्मृता सुप्रभाते ।
मनो मोदयन्मे परं दृक्चकोरस्तदा नाप तृप्तिं विषादः स घोरः ॥
तवाज्ञामहं मौलिमौलिं सयत्नं परागं पदाम्भोजयोर्भालरत्नम् ।
गुणोत्कीर्त्तनं कण्ठभूषामपारं स्मृतिं नाथ ! दध्यामुरस्तारहारम् ॥
प्रपा शीतला ते कृपा जीवलोकेऽभ्रमं त्वत्समं यत्परं नालुलोके ।
मनः पापतापाध्वखेदावभग्नं जगत्त्रातरत्राऽत एवाद्य लग्नम् ॥
स्मृतौ मानसं निर्मलं मन्यमानः प्रभोर्दर्शने दर्शने स्वे पुनानः ।
नतौ भालदुर्वर्णवल्लीं लुनानः स्तुतौ स्यामहं वावदूकाभिधानः ॥४०॥
पुरो दह्यमानागुरुस्तोमधूपभ्रमद्धूममालोक्य रूपैकभूप ! ।
तवेन्दीवरश्याममूर्त्तेर्हताशः कलिर्दशनाशं ननाश श्रिताशः ॥ ४१ ॥
सतीवास्ति रत्नत्रयी रागरोषादिभिर्दस्युभिर्मुष्यमाणापदोषा ।
प्रमत्तस्य मे त्वद्विधेयस्य तारं पुरः पूत्करोम्येष ते तामवारम् ॥४२॥
भवेच्चेन्मुखे लोललोलासहस्रं तथा जीवितं पूर्वकोटीरजस्रम् ।
स्तवैर्नव्यनव्यैः स्तुवे चेदुदारं ततोऽपीश ! तृप्तो मुदामस्मि नारम् ॥
प्रकृष्टाणवः सन्ति यावन्त एते त्रिलोकीगता मोषितानङ्गहेते ! ।
तवांह्री प्रणन्निर्म्मि तत्संख्य वारं ततोऽपीश ! तृप्तो मुदामस्मि नारम्॥

एवं देवाधिदेवं प्रतिदिनमपि यो जीरिकापल्लिराजं
पार्श्वं स्तौति त्रिसन्ध्यं त्रिदशविटपिनं भक्तिभाजामवन्ध्यम् ।
विश्वा विश्वाद्भुतास्ता नवनिधिरुचिरा ऋद्धयः सिद्धयो वा
तस्योत्सर्पैति पुंसः सपदि जगति याः श्रीमहेन्द्रस्तवार्हाः ॥४५॥

[ ३९ ]

श्रीभुवनसुन्दरसूरिप्रणीतं
श्रीजीराउलीमण्डन–

## श्रीपार्श्वजिनस्तवनम् ।

श्रीणां पदं सपदि दुर्विपदं विजेतुं 'पार्श्वप्रभुं' सकलमङ्गलकेलिहेतुम् ।
जीराउलीनगरमण्डनतारहारं तं संस्तुवे त्रिजगदभ्युदयावतारम् ॥१॥
चन्दारुसादरसुरेश्वरमौलिमौलिमाणिक्यमांसलमरीचिचयाम्बुभासि ।
देव ! त्वदायचरणाम्बुरुहे मदीयं चेतो मधुव्रतकलां कलयत्यजस्रम् ॥
सौवर्णपूरुपसुरद्रुमहाप्रभावधिक्कारकारिणि सुवारिणि दुःकृतागनौ ।
त्वद्दर्शने भवति तीर्थकरे हितार्थसार्थस्तरुर्मम फलेग्रहिरद्य भावी ॥३॥
श्रीमज्जिनेश्वर ! तव स्तवनप्रभावाल्लप्स्येऽहमुज्ज्वलगुणप्रभवां प्रतिष्ठाम् ।
प्रातः सहस्रकिरणारुणकान्तियोगात् प्रोत्फुल्लमुल्लसति पङ्करुहं न किं वा?॥
रागादिवैरिनिकरः परितोऽपि पीडाव्रीडावहो मम समस्ति जगञ्जयेश ! ।
तन्नायकस्त्वदपरो नहि कोऽपि विश्वे त्वामेव देव ! तदहं शरणं श्रितोऽस्मि ॥ ५ ॥
अन्येऽप्यमी हरिहरप्रमुखा जिनेन्द्र ! सन्त्येव तेषु न मनो मम लालगीति ।
चिन्तामणावनणुदातरि वाऽऽप्यमाने कः काचखण्डमुररीकुरुते मनस्वी ॥
मुक्तिं न दातुमलमन्यसुरास्त्वमेव तद्दानशौण्डमतिरस्यखिलाङ्गभाजाम् ।
त्वत्सेवकोऽहमपि देव ! ततस्तदर्थी त्वामेव विश्वजनवत्सलमाश्रयामि ॥
विश्वप्रभौ सफलदातरि विद्यमाने देवे भवत्यपि परे परमार्थशून्याः ।
दुर्दैवतान्यपि भजन्त्यथवा विहाय द्राक्षावणानि करभाः कलयन्ति निम्बम् ॥ ८ ॥
त्वद्दर्शने भवति भास्वरधर्मवृद्धिर्धर्मप्रवृद्धिवशतस्तव दर्शनं च ।
स्वर्भूर्भुवःप्रणतपादपयोरुहेत्यन्योन्याश्रयं मम निराकुरु देवदेव ! ॥

लोकेशताद्वयगुणं प्रगुणं स्वयम्भूर्मृत्युञ्जयत्वमपि शङ्कर एष देवः ।
लक्ष्मीपतिश्च पुरुषोत्तमतामवापुस्त्वत्पूजनस्तवनसंस्मृतितो जिनेन्द्र ! ॥

सच्चित्रवल्लिसुरधेनुसुपर्ववृक्षस्वःकुम्भमुख्यशुभकारिपदार्थसार्थैः ।
आराधितैर्य इह सौख्यभरो नृणां स्यात् त्वन्नामसंस्मरणतः स भवेदनन्तः॥

रागादयः प्रबलकष्टकरा हि तावत् तावच्च संसृतिपरिभ्रमणं महीयः ।
पीयूषवृष्टिकलया तव देव! दृष्ट्या स्पृष्टो न यावदयमङ्गिगणः सहेलम्॥

इन्दुः सुधानिधिवपुः कलकान्तिकान्तं भानुः समग्रजगतीतलभासकत्वम् ।
इन्द्रादयोऽपि परमेश्वरतामवापुस्त्वद्ध्यानतः सकलवाञ्छितदानरक्ष ! ॥

ते चक्रिणः स्फुटचतुर्दशदीप्ररत्नभास्वन्निधानतुरगेभसमृद्धिरुद्धाम् ।
यत्प्राज्यराज्यकमलां विमलां लभन्ते तत्तावकीनचरणार्चनजः फलांशः

नारायणा हलधरप्रमुखाश्च भूपा रूपातिशायिवपुषः सुखसन्ततीद्धाः ।
भोगप्रयोगसुभगं सुखमाप्नुवन्ति तत्ते मताश्रयणजोऽतिशयांश एव ॥

गङ्गाजलेषु विलुठन्तु पठन्तु वेदान्
ध्यायन्तु किञ्चिदथ भान्तु तपस्क्रियाभिः ।
देवान् नमन्तु विरमन्तु भवात् तथापि
त्वद्ध्यानशून्यहृदयेषु विभो ! न मुक्तिः ॥१६॥

तेपे तपो न समयोऽपि समो न पेठे नेमे न तीर्थमथ दानगुणे न रेमे
कश्चिन्नरैरलसमूर्त्तिधरैस्तथापि त्वद्ध्यानतः शिवपदं जिनराज ! लेभे ॥

स्वान्यप्रकाशकरणप्रवणस्वरूपं यल्लक्षणं निजगदे जगदेकनाथ ! ।
भास्वत्प्रमाणयुगलस्य जिन! त्वयेदं वाभाति सत्यमपरं तु न युक्तियुक्तम्॥

मन्वेतसस्तव गिरश्च सदाप्यभावमन्योन्यपूर्वकमपास्य जगन्नमस्य ! ।
तादात्म्यमेव कुरु येन विभो ! भजेयं तत्तावकीनपदमभ्युदयावदातम् ॥
यास्यत्ययं कुगतिमेव कुकर्मकृत्त्वादित्येष हेतुरिह लक्षणलक्षिताङ्गः ।
सिद्धोऽप्यसिद्धपदवीमयते यतीश ! त्वद्ध्यानबन्धुरतरस्य नरस्य सद्यः॥
भास्वत्प्रमाणयुगलोज्ज्वललोचनश्रीर्देव ! त्वया सदसदात्मकवस्तुरूपः ।
स्याद्वाद एष निहितः प्रणिहन्ति सद्यः कण्ठीरवः
कठिनवादिमदद्विपेन्द्रान् ॥२१॥
कालाद्यभेदवशतो युगपत् समग्रादेशात्मिका निगदिता खलु सप्तभङ्गी ।
स्वामिन् ! प्रमाणवचनं भवतेयमाशु वादे ददाति विजयश्रियमेव पुंसाम् ॥
वस्त्वंशमात्रकथनादसमग्रभावादेशात्मिका नयवचःशुचिसप्तभङ्गी ।
स्यादेवकारकलिता भवता न्यगादि या सापि देव !
कुमतद्विपराजिसिंही ॥ २३ ॥
एकत्र वस्तुनि जनिस्थितिनाशरूपैः कालत्रयेण गुणितैः स्वपरत्वयुक्तैः ।
भङ्गैस्त्वयोक्तमवगच्छति वस्त्वनन्तधर्मात्मकं प्रवरधीधन एव नाऽन्यः॥
उच्चारितेऽपि तव नाम्नि विपद्विनाशः सम्पद्यते सपदि सम्पदपि प्रकृष्टा॥
मुक्त्यङ्गनाऽपि वृणुते तदयं जनौघो रात्रिंदिवं स्मरति देव ! तदेव हर्षात्॥

जन्मक्षणे तव विभो ! सुरसुन्दरीणां
नाट्यत्रुटत्प्रवरहारलताच्युतै रत्नैः ।
सद्रत्नमौक्तिकगणैर्महितेव मेरो-
र्भूः काञ्चनीसुभगतां समवाप सद्यः ॥ २६ ॥
मद्यात्मकं परमसौख्यमयं प्रधानै-
र्मायं कुकर्मरहितं सहितं गुणौघैः ।

त्वद्रूपमेव समवेक्ष्य निजस्वरूपं
ते योगिनस्तव पदं भगवंल्लभन्ते ॥ २७ ॥
त्वद्गोत्रमन्त्रवरवर्णततिं स्वकीये
हृत्पङ्कजे प्रवरपत्रततौ निधाय ।
यो ध्यायति त्रिजगदीश्वर ! तस्य पुंसो
वश्या भवन्ति सकला अपि सिद्धयस्ताः ॥ २८ ॥
सालत्रयान्तरतिशुभ्रतरातपत्रं
सिंहासनस्थममरेश्वरसेव्यमानम् ।
त्वां भासुरातिशयमाशयदेशमध्ये
ध्यायन्नरो भवति भाजनमीशतायाः ॥ २९ ॥
निःस्पर्शरूपरसगन्धमजन्ममृत्युं
सिद्धं निरञ्जनमनन्तचतुष्टयाढ्यम् ।
यश्चिन्तयत्यविरतं तव रूपमीदृग्
देव ! ध्रुवं पदमसौ लभते क्रमेण ॥ ३० ॥
चौरा इव प्रबलरोगगणा जिनेन्द्र !
त्वद्ध्यानभानुवशतः प्रलयं प्रयान्ति ।
पद्माकरा इव शुभप्रकराः श्रयन्ति
प्रोल्लासमाशु पुरुहूतनमस्कृताङ्घ्रे ! ॥ ३१ ॥

श्रीसोमसुन्दरगुरूत्तमसूरिराजशिष्याणुना **भुवनसुन्दरसूरिणा** त्वम् ।
देव ! स्तुतः प्रवरभक्तिभरेण दद्याः सानन्दशाश्वतपदाभ्युदयस्य लक्ष्मीम् ।

इति श्रीजीराउलिमण्डनश्रीपार्श्वजिनस्तवनम् ।
भट्टारकश्रीभुवनसुन्दरसूरिकृतम् ॥

---

[ ३९ ]

श्रीभुवनसुन्दरसूरिसन्दृब्धं

श्रीजीराउलीमण्डन–

## श्रीपार्श्वनाथस्तवनम् ।

श्रियः क्रीडागेहं रुचिरुचिरदेहद्युतिभरं
त्रिलोकीविख्यातप्रकटपटुमाहात्म्यविभवम् ।
स्तुवे जीरापल्लीयुवतिगुरुमल्लीयमुकुटं
प्रभुं श्रीवामेयं प्रणवमयताध्येयमनिशम् ॥ १ ॥

तव ध्यानं स्वामिन् ! विदधति सदा येऽधिमनसं
न सन्देहस्तेषाममरनिकरः किङ्कर इव ।
भुजिष्यीभावं सा भजति नृपतिश्रेणिरपि च
प्रभो ! ह्रींकारात्मन् ! जनततिरतस्त्वां श्रितवती ॥२॥

सुपर्वद्रुश्रेणीसुरवरगवीनामनुपमः
सुधासुन्दकुम्भादेरपि च महिमा विश्वविदितः ।
भवेत् सर्वोत्तश्रीर्यदुरुमहिमादित्यपुरतः
प्रभो ! श्रीबीजात्मन् ! स भव भविनां त्वं सुखकरः ॥

सदाऽर्हन्त्वं त्वामनपनिर्ससिन्यचरणं
चतुस्त्रिंशत्प्रौढातिशयकल्लोल्लासनरविन् ।
स्फुरद्रत्नस्वर्णप्रकरमयसिंहासनजुषं
श्रयन् भव्यः प्राणी भजति भगवंस्तत् तव पदम् ॥४॥

नमस्तुर्ये सर्वहितसुखकरं त्वां त्रिजगती–
शरण्यं सार्वश्रीयुवतिहृदये हारसदृशम् ।

सुपर्वस्वाम्यालीस्फुटमुकुटकोटीतटलुठन्-
मणिज्योतिर्द्योत्यप्रवरचरणाम्भोजयुगलम् ॥ ५ ॥
प्रतिष्ठां पुष्यन्ते हरिहरविरिञ्चप्रभृतयः
सुपर्वश्रेणीशा अपि च यदवपुर्जिनपते ! ।
तव स्वामिन् ! पद्मानिलय ! कमलाभाङ्घ्रियुगली-
सपर्या वर्यासौ सततविहिताहेतुरिह तत् ॥ ६ ॥
निषिद्धा सिद्धान्ते सकलममता यद्यपि विभो !
तथापि त्वं स्वामी जिनवर ! सदा मे नहि परः ।
मयेत्थं निर्णिन्ये तदियमुचिता तेऽपि भगवन् !
ममानुग्राह्योऽसाविति च करुणा सन्ततमपि ॥७॥
अकुण्ठाः श्रीकण्ठाच्युतविधिमुखानामपि चिदो
नदीयन्ते तेऽस्मिन् प्रवरतरविज्ञानजलधौ ।
त्वमेव ध्येयोऽतस्त्वमसि शरणं त्वं च सुखकृत्
ततस्त्वामेवाहं शरणमभजं दैवतनत ! ॥ ८ ॥
अहं याचे मुक्तिं न च हरिविरिञ्चप्रभृतयः
समर्थास्तां दातुं तदहममलं ते पदयुगम् ।
श्रितस्तत्त्वं विश्वाधिप ! सकलकर्मामयमलं
मलं हत्वा सद्यो वितर तरसा तां श्रितवते ॥९॥
प्रभूता भूताद्याः प्रबलतररोगा अपि तथा
तव स्वामिन् ! नाम स्मरणवशतो यान्ति विलयम् ।
प्रचण्डे मार्तण्डे स्फुरति यदि वा द्योतितदिशा-
समूहेऽतिव्यूहस्तिमिरनिकरस्य प्रभवति ॥१०॥

प्रियप्राप्तेर्हेतुः सततमबलानामपि धरा–
वनश्रीशोभाकृत् प्रवरसुमनःशालिफलदः ।
सदालिप्रोल्लासी सुखिततमपुंस्कोकिल ! लस–
द्रसालाभो देवस्त्वमसि सुरभिः प्रीतभुवनः ॥ ११ ॥

लसद्यादोनाथो रचयसि मुदं सोमरुचिभिः
प्रतापश्रीपोषं प्रबलजडताशोषमपि च ।
मरुच्चक्रासेव्यः परिमललसच्चम्पकतति–
र्जगद्दौक्यात्रौघो जयसि भगवंस्त्वं तपऋतुः ॥१२॥

जिन ! त्वत्तो रम्या प्रभवति सरस्वत्यमृतदा
निमित्तं शस्यानां त्वमपि सकलानां जिनपते ! ।
त्वदायत्तः सर्वो भुवनजनतायाः सुखभरः
पयोदस्त्वं चित्रं हरसि सकलं मेऽघपटलम् ॥१३॥

सदाशालिस्फातिर्भवति सफला साधु कविभिः
श्रिता त्वत्तः स्वामिन् ! प्रवरवृषपोषैकनिपुण !
स्फुरत्पद्मोल्लासिन् ! सकलभुवनानां कलुषता
निराकर्तुस्त्वं जयसि शरदस्तुल्यमहिमा ॥ १४ ॥

सदा पुन्नागश्रीः प्रभवति विभो ! दुर्भगतमा
लभन्ते सौभाग्यं प्रसरति हिमाली जनततौ ।
जनः प्रौढज्योतिःपटलपरिपेवी स्फुटलमा–
नुभायामस्यासौ त्वमसि गुरुहेमन्तविभवः ॥ १५ ॥

पलाशानां पातं विदधति सदा पादपततौ
रुचिं स्वामिन् ! दोषाकरगुरुगवां नो प्रथयति ।

सदानालीकालीर्दहति विलसत्कुङ्कमततौ
स्फुरत्कुन्दामोदे त्वयि शिशिरताऽसौ समुचिता ॥१६॥
जरासिन्धून्माथी नरकरिपुहा कामजनकः
स्फुरन्मायास्थानं प्रवरगुणगोपीवरतमः ।
सदानन्दोल्लासी जिनवर ! यशोदायकघनो
जगन्नाथोऽपि त्वं तदधिकगुणो रागहरणात् ॥१७॥
अनात्मानो भूमिरुह इह विना कर्म यदि भोः
श्रयन्ते वृद्ध्यादीन् फलमुखभुजां भाग्यवशतः ।
तदा वर्णिन्योऽपि स्वपतिकृतपुण्यातिशयतो
भजन्तामुत्पत्तिप्रभृति समयुक्तीक्षणवशात् ॥ १८ ॥
तदीया भर्त्तारोऽप्यथ च महिलाकर्मवशतो
जुषन्तां जन्मादिस्वकृततृपजन्त्वादिविकलाः ।
सदापीत्थं यूथ्याः परमतगता युक्तिरहिता
विडम्बन्ते येषां त्वमसि नहि शास्ताऽस्तकुमते ! ॥१९
हराद् भूतो ब्रह्मा रचयति जगन्तीह किमसौ
हरेरेतानि प्राग् यदुरुजठरे सन्ति सततम् ।
बहिश्चेदेतानि प्रणयति हरिस्तत्र जगता-
मभिव्याप्तेत्येवं त्वदपरकथा नाथ ! वितथा ॥ २०॥
जगद्विश्रामार्थं यदि पशुपतिः संहृतिविधा-
वदृष्टं संरुन्द्धे प्रसृतकरुणास्तत्र कुरुते ।
कुतो दुष्टादृष्टव्यथितवपुषः स्वकमञ्जुषो
जनान्नित्यानन्दाननृतमिति नाथाऽन्यवचनम् ॥ २१ ॥

समर्थः संहारे यदि पुररिपुश्चेतनमनाः
ककुप्कालाणूनां किमु न कुरुते संहृतिमसौ ।
स्वभावादुत्पत्तिस्थितिविलयिताभित्रिपदिका
त्वयोक्ता या साऽतस्त्रिभुवनपतेऽर्थेषु घटते ॥२२॥
त्वया सार्द्धं स्पर्द्धां दधदतिगभीरत्वरमया
बभूवाभिक्षारक्षततनुरिहाघोऽम्बुधिरतः ।
अयोग्यत्वात् क्षिप्तो बहिरपि जगत्याः स विधिना
जनैरित्युक्तस्तत् प्रबलजडधीरूपभृदयम् ॥ २३ ॥
यथा दुग्धः शण्डः स तरुरवकेशीव शरदो-
ऽम्बुदो यद्वद् वन्ध्या युवतिरिव काशे कुसुमवत् ।
परे देवाः सेवाकृति नरि फलं नैव ददते
श्रितस्तत्त्वां स्वामिन्नभिमतविधाने सुरतरुम् ॥ २४ ॥
विभो ! कल्याणात्मन् ! सकलभुवनोत्कृष्टगरिमन् !
क्षमारामारम्याभरण ! शरण ! त्वं सुमनसाम् ।
जिन ! प्रोद्यज्जन्मावसरसुरक्लृप्तोत्सवततिः
सुखाभोगारलेपी जयसि सततं मन्दरगिरिः ॥२५॥
मया स्पर्द्धि प्रौढ्या तव गुरुहृदातोऽभवमघात्
घनश्यामं तन्मां कुरु जिनपते ! सुन्दरवपुः ।
किलेत्थं विज्ञप्त्यै प्रहततिरियं प्रैपि नभसा
त्वदङ्गूवचाः सा लग्ना सकलमनुजैर्वीक्ष्यत इह ॥२६॥
विभो ! त्वामेव श्रीनिकरमुरुभावात् प्रददतं
गुरूकृत्य प्रौढामरतरुगणः शिष्य इव यः ।

सदभ्यस्तोचक्रे प्रवरतरदानं कथमसौ
प्रदातृत्वात् तुल्यो भवति भगवंस्ते सुरनत ! ॥ २७ ॥

यतो लोकः सर्वो भवति कलितः शस्यरमया
श्रयन् नव्यां भूषां विलसति सदा मोदकतया ।
स्फुरज्ज्ञानज्योतिःपटलकृतनीराजनविधि-
र्जिनेश ! त्वं दीपोत्सव इव जयस्येष गुणवान् ॥२८॥

अशोकः शोकार्त्तिं हरति कुरुते चाद्भुतसुखं
सदा पौष्पी वृष्टिः किमु नु सुखसृष्टिस्त्रिजगतः ।
ध्वनिर्दिव्यः श्रोत्रेष्वमृतरसदानैकरसिकः
शरच्चन्द्रज्योत्स्नाधवलचमराली गतमला ॥ २९ ॥

स्फुरद्रात्नं सिंहासनमुरुरुचां मण्डलमिदं
जनाल्हादि प्रोद्यन्मधुरिमगुणो दुन्दुभिरवः ।
सितज्योतिश्छत्रत्रितयमिति रम्या अतिशया-
स्तव स्वामिन् ! ध्याता अपि विदधते मङ्गलततिम् ॥

प्रौढश्रीगुणरत्नरोहणगिरे ! श्रीपार्श्व ! विश्वप्रभो !
त्रैलोक्याम्बुधिसोमसुन्दरगुरो ! देवेन्द्रवृन्दस्तुत ! ।
श्रीजीराउलिनामधेयनगरीश्रृङ्गारहार ! प्रभो !
भूयास्त्वं भुवनस्य वाञ्छितविधौ चिन्तामणिः सर्वदा ॥

श्रीपार्श्वनाथस्तवनम् । श्रीभुवनसुन्दरसूरिकृतम् ।

[ ३७ ]

श्रीभुवनसुन्दरसूरिप्रणीतं

श्रीकुल्पपाकतीर्थालङ्कार-

## श्रीऋषभजिनस्तवनम् ।

महाभाग्यसौभाग्यलक्ष्मीनिवासं प्रदत्तप्रमादादिदोषप्रवासम् ।
त्रिलोकप्रकाशिस्फुरज्ज्ञानगेहं युगादिप्रभुं कुल्पपाके स्तुवेऽहम् ॥१॥

यथा भूष्यते भूतलं भानुकान्त्या वनं वा स्फुरद्गन्धविभ्राजिजात्या ।
यथा कल्पवृक्षेण मेरुप्रदेशस्त्वया नाथ ! तद्वत् तिलङ्गाह्वदेशः ॥२॥

ललाटे विराराटि पीयूषरोचिः प्रधानौष्ठबिम्बे च ते तीक्ष्णरोचिः ।
विभो ! नाभिदेशे च ते लिङ्गरूपं कराम्भोजयोः शङ्खचक्रस्वरूपम् ॥

त्वदीयेन पुत्रेण ते चारुमूर्तिर्विभो ! चक्रिणाऽकारि विस्तारिकीर्तिः ।
जटाकाररेखाङ्कितांसप्रदेशा लसन्नीलमाणिक्यरूपा नतेशा ॥ ४ ॥

अहं सूक्ष्ममात्रोऽपि देवेश ! दिष्ट्या त्वदीयामृतस्यन्दिरोचिष्णुदृष्ट्या ।
अभूवं कुकर्मामयैर्विप्रमुक्तस्तथाभीष्टलक्ष्मीविलासैः प्रयुक्तः ॥५॥

मयाऽऽज्ञा त्वदीया यदा ह्यधारि तदैवाखिलः पापपङ्कोऽप्यहारि ।
त्रिलोकाद्भुतप्रौढलक्ष्मीर्व्यचारि स्वचित्ते च हर्षामृतस्यन्दकारि ॥ ६ ॥

सुपर्वद्रुचिन्तामणीकामकुम्भस्फुरत्कामधेन्वादिवस्तूपलम्भः ।
प्रभो ! दर्शने तावकीनेऽप जातः प्रमोदाब्धितानन्ददेवेन्द्रजात ! ॥७॥

मया प्रापि भाग्येन ते नाथ ! वाणी जडत्वादिदोषारिवृन्दे कृपाणी ।
त्वदग्रे ततो नाथ ! संयोज्य पाणी स्तुतौ स्यामहं कोविदेषु प्रमाणी ॥
मयान्तर्भवं भ्राम्यता देवदेव ! जरामृत्युविच्छेदकारी त्वमेव ।
प्रमोदोत्थरोमाञ्चितेनाऽद्य दृष्टस्तदैवापदोघः समग्रः प्रणष्टः ॥ ९ ॥
मया वक्त्रलक्ष्मीस्त्वदीयाऽद्य दृष्टा भवभ्रान्तिभीतिस्तदैवाशु नष्टा ।
तमःस्थेमरूपं भजेत् किं नु भानौ तृणौघोऽथवा सुस्थिरः स्यात् कृशानौ ? ॥ १० ॥
मुखे कोटिशश्चेद् भवेयू रसज्ञा दृशश्चापि रूपस्वरूपेषु विज्ञाः ।
गुणान् वक्तुमालोकितुं रूपधेयं तथापि प्रभुः कस्तवेन्द्रादिगेयम् ॥
समर्थः प्रभुः कोऽपि नास्ति त्वदन्यः कृपास्थानकं नास्ति विश्वे मदन्यः ।
ममोपर्यतो देहि दृष्टिं प्रसन्नां प्रकुर्वे यतः कामसेनां विभिन्नाम् ॥१२॥
आराध्य सुस्थितसुरं लवणाब्धिमध्यादानीय शङ्करनृपो भगवंस्तिलङ्गे ।
त्वां कुल्पपाकनगरे प्रकटप्रभावं प्रातिष्ठिपद् विपुलमङ्गलऋद्धिवृद्धयै ॥

रुचिरचमरमाला श्वेतरम्यातपत्र-
त्रितयमनुपमोऽयं दुन्दुभीनां निनादः ।
विविधकुसुमवृष्टिश्चैत्यवृक्षः सुगन्धो
मणिनिकरविनिर्यत्कान्तिसिंहासनं च ॥ १४ ॥
प्रसृतबहुलतेजःपिण्डभामण्डलश्रीः
श्रवणपरमसौख्यादायिदिव्यध्वनिश्च ।
इति जिनवर ! वीक्ष्य प्रातिहार्यश्रियं ते
न भवति भुवनालङ्कार ! कस्य प्रमोदः ? ॥ १५ ॥
युग्मम् ।

इत्थं श्रीश्रितकुल्पपाकनगरालङ्कारचूडामणिं
श्रीमन्नाभिनरेन्द्रवंशकमलप्रोल्लासनाहर्मणिम् ।
यः श्रीआदिजिनं निरस्तवृजिनं तोष्टूयते भक्तिभाक्
तं वृण्वन्ति जगत्त्रयाद्भुतरमा रामा इवोत्कण्ठिताः॥१६॥
इति श्रीकुल्पपाकतीर्थश्रीऋषभजिनस्तवनम् ।
श्रीश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिकृतम् ॥

( ३८ )

श्रीभुवनसुन्दरसूरिप्रणीतं

## श्रीजीराउलिमण्डनपार्श्वनाथस्तवनम् ।

श्रियोऽभिवृद्धिं विजयोत्सवांश्च यस्यानुभावाल्लभते जनोऽयम् ।
जीराउलीमण्डनपार्श्वनाथं स्तोष्ये प्रभुं तं किमपि स्वभक्त्या ॥१॥
प्रज्ञो भवेन्नैव सहस्रजिह्वो न वाक्पतिः सन्मतिभाजनं सः ।
त्वद्वर्णनायां तदपि प्रभो ! मां भक्तिस्तवैषा तरलीकरोति ॥ २ ॥
रमापतिः प्रागरमोऽपि भाग्यैस्त्यक्तोऽपि भाग्याभ्युदयप्रधानः ।
आरोग्यवान् रोगयुतोऽपि सद्यस्त्वद्दर्शनादेव भवेन्नरोऽयम् ॥ ३ ॥
अकीर्तिरप्युज्ज्वलकीर्तिलक्ष्मीं रूपश्रियं रूपविवर्जितोऽपि ।
अबुद्धिरप्यद्भुतबुद्धिसिद्धिमासादयेदेव ! तव प्रसादात् ॥ ४ ॥
कल्पद्रुलम्भः शुभकामकुम्भश्चिन्तामणिर्नाम महामणिश्च ।
यन्नैव दातुं प्रभवो भुवोऽपि ददासि सद्यस्तदपि प्रभो ! त्वम् ॥५॥

तवैव भक्तिर्जिन ! भुक्तिमुक्तिहेतुर्नरेष्वेव च सा समग्रा ।
ध्यात्वेति देवा मनुजावतारं मनोहरं न स्पृहयन्ति के के ? ॥ ६ ॥

प्रभो ! त्वदाज्ञावरहारवल्ली विभूषणं यस्य हृदो बभूव ।
सौभाग्यभङ्गीसुभगं वृणीते तं सिद्धिलक्ष्मीरपि दुर्लभा सा ॥ ७ ॥

तदेव वर्षं गुरुहर्षहेतुः स एव मासः सुखसन्निवासः ।
दिनं घनांहोमथनं तदेव त्वं वीक्ष्यसे यत्र विभो ! जितात्मा ॥८॥

रत्नानि रो णगिरेः कनकानि मेरो रूप्यानि च प्रवररूप्यगिरेर्गृहीत्वा ।
सालत्रयं प्रवररत्नमयं नु यस्यां देवैस्तवेश ! रचितं निचितं महोभिः॥

यस्यां तवोपरि परिस्फुटचन्द्रकान्तचन्द्रेशचन्द्रकरशुभ्रमदभ्रमूर्त्ति ।
छत्रत्रयं प्रवरमौक्तिकरत्नराजिविभ्राजि राजति तवोज्ज्वलकीर्त्तितुल्यम् ॥

तापप्रचारशमनः सुमनोनिषेव्यः पादैः पवित्रतधरो नृसुरप्रमोदी ।
स्कन्धश्रिया प्रवरयाऽतिविराजमानश्चैत्यद्रुमस्त्वमिव देव ! विभाति यस्याम् ॥ ११ ॥

भास्वन्मणीमयमुदारतरप्रभाम्भः पद्मीभवत्प्रणतदेवकिरीटकोटि ।
भाति त्वदीयवपुषांशुपुषा हि यस्यां सिंहासनं स्फुटरुचा मणिनेव मौलिः॥

सुरासुरैर्निर्मितदण्डमण्डितः सच्चामरैः शुभ्रतरैः प्रवीजितः ।
त्वं राजसे यत्र जगत्पते ! यथा सौदामिनीदामविराजिताम्बुदः ॥१३॥

तेजःश्रिया निर्जितभानुमण्डलं त्वद्रूपलक्ष्म्याः किल कर्णकुण्डलम्
प्रमोदिताखण्डलमण्डलं मुहुर्भामण्डलं राजति यत्र ते विभो ! ॥१

सुरनिकरकराग्रस्रस्तमन्दारजाति-
प्रमुखकुसुमवृष्टेर्दम्भतः सेवितुं त्वाम् ।

उद्भुततिरवतीर्णा किं नु यत्र त्वदीय-
स्फुरदुरुतरकीर्त्यां स्फूर्तिमत्या जितेयम् ॥ १५ ॥

अयमिव जिनभर्त्ता दुःखहर्त्ता सुसम्प-
न्मयशिवपदकर्त्ता वर्त्ततेऽन्यो न कश्चित् ।
इति वदति नभःस्थो दुन्दुभिस्ते पुरस्ता-
ज्जिन ! जलधरगर्जि तर्जयन् यत्र नादैः ॥ १६ ॥

विलसदमृतधाराः किं पिबाम्येष हर्षा-
न्मधुरतरपयो वा कामधेनुस्तनोत्थम् ।
इति जननिकरेण ध्यायताऽपायि यस्यां
पुलकिततनुभाजा नाथ ! गौस्तावकीना ॥ १७ ॥

मोहाह्वभूपतिरयं जगतामसाध्यो-
ऽसाधि त्वया मदनमुख्यभटैर्युतस्तत् ।
उत्तम्भितस्तत्र पुरः सुरसेव्य ! यस्या-
मिन्द्रध्वजस्य मिषतो विजयध्वजोऽयम् ॥ १८ ॥

धैर्येणावरितेन मेरुगिरिणा सर्वसहत्वेन वा
पृथ्व्या निर्जितया स्वरत्ननिचयः प्रादायि यस्ते विभो ! ।
तेजःश्रीभिरपाकृतैर्दिनकरैर्यद्वा रुचां मण्डलं
तैरेतद् विदधे किमित्यविरतं यत् तर्क्यते कोविदैः ॥१९॥

तद्धर्मचक्रं भगवंस्तवाग्रे देदीप्यते दीप्तिविराजि यत्र ।
श्रीतीर्थलक्ष्मीललनाललाटे ललामशोभां प्रथयत् सदापि ॥ २० ॥
॥ युग्मम् ॥

मणिमयकपिशीर्षकालिस्फुरत्किरणगणागुरुवप्रशीर्षसंस्था ।
मुकुरति गगनस्पृशां सुरीणां वदनविलोकविधौ सदापि यत्र ॥२१॥
मणिमयभुवि बिम्बितं निरीक्ष्यामरनिकरं किमु नः पुरीर्जिघृक्षुः ।
प्रचलति सुरसार्थ एष इत्याकुलहृदयोऽजनि यत्र दैत्यवर्गः ॥२२॥
यत्रेन्दुकान्तमयभूमिषु चन्द्रकान्त्याश्लेषाद्द्रवामृतरसैर्वनैश्च तेऽर्हन् ॥
पद्भ्यो हृदोऽपि च चलन्मृगलोचनानां रागः प्रयात्यविकलो मलवज्जलेन ॥ २३ ॥
द्वारेषु मौक्तिकमयीः प्रतिबिम्बभाजो लक्ष्मा विलोक्य मणिभूषु सितेतरासु ।
त्रस्ता किमस्मदुरुहारलतेति यस्यामस्याकुला मृगदृशो हृदयं स्पृशन्ति ॥
तोरणस्थाशतिरुद्रमणिमालां बिम्बितां स्फटिकभूमिषु यत्र ।
वीक्ष्य वातचपलां चलतोऽहेर्भीतितोऽतितरला महिलाः स्युः ॥२५॥
स्फटिककुट्टिमकोटितटोल्लसद्विविधनीलमणीननणीयसः ।
समवलोक्य हरित्तृणवाञ्छया यदुपरि त्वरिता हरिणा न के ॥२६॥

हर्षोत्कर्षवशप्ररूढरभसप्रारब्धनाट्यक्रिया-
भ्रश्यन्निर्मलहारमौक्तिकगणं यं पातयाञ्चक्रुषी ।
पौलोमी पुलकोल्लसत्तनुलता विश्वेश्वर ! त्वत्पुर-
स्तस्या यत्र स एव वीजति महानन्दद्रुमोद्भूतये ।
भक्त्याविष्कृतभावभासुरनरस्वर्वासिनां सन्तते-
रुद्गच्छत्पुलकप्रवर्द्धिततनौ चित्तेऽपि यस्यां मुहुः ।
स्वामिंस्तेऽङ्घ्रितिविष्टविस्फुटनखप्रोद्यद्रुचां मण्डलं
व्याहाराश्च मनोहराः सततमप्युद्द्योतमातन्वते ॥ २८ ॥

इति विविधविकल्पांस्तन्वती कोविदानां
समवसरणभूमिः कस्य न स्यान्मुदे सा ।
जिनवर ! तव यस्याः श्रीविशेषावलोकाद्-
भवति तदपि नूनं स्वर्विमानं विमानम् ॥ २९ ॥

किन्नर्यो गिरिकन्दरेषु महिला भूवल्लभानां क्षितौ
पाताले दनुजस्त्रियः सुरवधूवृन्दानि देवालये ।
व्यन्तर्यो विविधाश्रयेषु भगवन् ! सङ्ख्यातिगांस्ते गुणान्
वीणावेणुवरक्वणातिमधुरं गायन्ति रात्रिन्दिवम् ॥ ३० ॥

मोहद्रोहरुदामहप्रहमदोन्मादप्रमादस्फुर-
ल्लोभक्षोभमुखान्तरारिनिकरैः पीडां परां प्रापितः ।
स्वामिंस्त्वां शरणं श्रितोऽस्मि जगतां दुःखक्षयायैव य-
न्मुक्तिस्थोऽप्यवतीर्णमानसि भुवं त्वं विश्वविश्वेश्वरः ॥३१॥

निर्नीरेऽम्बुरुहं मरौ सुरनदीदौस्थ्ये सुरद्रुः कुहू
तम्यां पूर्णनिशाकरो हिमभरे मध्यान्हभानूदयः ।
सत्येऽप्यद्भुतराज्यमापदि महासम्पत्प्रकर्षः कलौ
काले‍ऽस्मिन्नपि यज्जगत्त्रयपते ! त्वद्दर्शनं देहिनाम् ॥३२॥

सौधे लक्ष्मीरगण्या पटुकरटिघटा वाजिनः स्वर्णभूषा
आयुः प्रौढं प्रभुत्वं विमलतरयशो व्यापदः सम्पदाप्त्यः ।
रूपं चातुर्यरूपं त्वदमलचलनोपासना कल्पवल्लेः
पुष्पाण्येतानि विश्वाधिप ! शिववनितास्वामितार्द्धं फलं तु ॥३३॥

श्रीजीरापल्लिदेव ! त्रिजगदधिपते ! प्राग्यराज्यादिलक्ष्मी-
दातस्तात ! त्वदीयामलचलनयुगोपासनावासनातः ।

स्तुत्वैवं प्रार्थये त्वां महिमदिनकरज्योतिरुद्योतिताशं
यस्मात् त्वं प्रार्थितार्थस्फुटघटनविधौ कल्पवृक्षाधिकश्रीः ॥२४॥

॥ इति श्रीजीराउलिमण्डनपार्श्वनाथस्तवनम् ।
भट्टारकश्रीभुवनसुन्दरसूरिकृतम् ॥

---

( ३९ )

श्रीभुवनसुन्दरसूरिविरचितं

## श्रीपावकदुर्गमण्डनश्रीशम्भवनाथस्तवनम् ।

---

महाप्रातिहार्यश्रिया शोभमानं सुवर्णादिवप्रत्रयीदीप्यमानम् ।
स्फुरत्केवलज्ञानवल्लीवसन्तं स्तुवे पावके भूधरे शम्भवं तम् ॥ १ ॥
कलाकेलिकेलीविनाशैकदक्षं समस्ताङ्गिनां प्रार्थिते कल्पवृक्षम् ।
त्रिलोकीतले पापपूरं हरन्तं स्तुवे पावके भूधरे शम्भवं तम् ॥ २ ॥
महामोहसर्पप्रणाशे सुपर्णं प्रभामण्डलोल्लासिगाङ्गेयवर्णम् ।
महाभाग्यसौभाग्यभङ्गीं धरन्तं स्तुवे पावके भूधरे शम्भवं तम् ॥३॥
सुधासोदरोल्लासिवाणीविलासं प्रमादादिविद्वेषिदत्तप्रवासम् ।
त्रिलोकीस्थितान् सर्वभावान् विदन्तं स्तुवे पावके भूधरे शम्भवं तम् ॥
स्थितं पुण्डरीकाचलस्यावतारेऽखिलक्ष्माधरश्रेणिशृङ्गारहारे ।
तृतीयं जिनं कुन्ददन्तं भदन्तं स्तुवे पावके भूधरे शम्भवं तम् ॥५॥
प्रभो ! मज्जता भीमसंसारकूपे मया देव ! लब्धोऽसि दुःखौघरूपे ।
दृढालम्बनं यस्त्वमंहस्तदन्तं स्तुवे पावके भूधरे शम्भवं तम् ॥६॥

ददास्यङ्गिनां देव ! सर्वार्थसिद्धिं हरस्युग्रमिथ्यात्वमायादिवृद्धिम् ।
अतोऽभीष्टदो यस्त्वमेवोल्लसन्तं स्तुवे पावके भूधरे शम्भवं तम् ॥७॥
प्रभो ! देवरत्नं मया लब्धमद्य समासादितः कल्पवृक्षोऽपि सद्यः ।
यतः प्रापि भाग्योदयैर्भद्रवन्तं स्तुवे पावके भूधरे शम्भवं तम् ॥८॥

चाम्पानेरपुरावतंसविशदः श्रीपावकाद्रौ स्थितं
सार्वं शम्भवनायकं त्रिभुवनालङ्कारहारोपमम् ।
इत्थं यो गुरुभक्तिभावकलितः संस्तौति तं वृण्वते
ताः सर्वा अपि मङ्गलोत्सवरमाभोगान्विताः सम्पदः ॥९॥

इति श्रीपावकदुर्गमण्डनश्रीशम्भवजिनस्तवनम् ।
श्रीभुवनसुन्दरसूरिविरचितम् ।

---

[ ४० ]

श्रीभुवनसुन्दरसूरिसूत्रितं

## श्रीशत्रुञ्जयस्तवनम् ।

---

श्रीशत्रुञ्जयशैलभासुरशिरःश्रृङ्गारचूडामणे !
श्रीनाभेय ! जगन्मनोऽम्बुजवनप्रह्लादनाहर्मणे ! ।
रम्यां सिद्धिवधूं वुवूर्षुरखिलं पापं जिहीर्षुर्निजं
त्वामज्ञोऽपि निनीषुरस्मि भगवन् ! मार्गे गिरां किञ्चन ॥१॥
भाग्यैरुत्पलमण्डलैरिव जगद्भर्त्तः ! समुन्मीलितं
प्रौढप्राच्यभवार्जितैर्मुकुलितं पापैः सरोजैरिव ।

आनन्दाम्बुधिना च मेऽद्य भगवन् ! कल्लोललीलायितं
त्वद्वक्त्रामलचन्द्रमण्डललसद्भामण्डलेक्षोत्सवे ॥ २ ॥
त्वद्यात्रागतदेहिनां गजपतेः स्कन्धाधिरूढा सती
त्वन्मातव समग्रपापपटलं वेभिद्यते प्रागपि ।
तेन त्वं जगतां पते ! किल कलप्रासादमध्यस्थितो
ध्यानासीन इवेक्ष्यसे विगततच्चिन्ताचयः प्राणिभिः ॥३॥
चेतश्चिन्तितदानदैवततरुः श्रीकपर्दीश्वर-
स्त्वद्यक्षाधिप एव देव ! सकलान् विघ्नान्निजेघ्नीयते ।
यत्प्रागेव समग्रयात्रिकजनव्रातस्य रात्रिंदिवं
तद्व्यापारविधौ समस्तु भगवंस्तत्ते कुतस्त्यः श्रमः ? ॥ ४ ॥
त्वत्प्रासादशिरोऽधिरुह्य भगवन् ! दोकूल एष ध्वजः
प्रान्तालिङ्गितकिङ्किणीक्वणनिभाद् ब्रूते किलैतद्वचः ।
हे लोका ! यदि सिद्धिनामकपुरीं द्रष्टुं समुत्कण्ठते
चेतस्तत्तदधीश्वरं जिनममुं सेवध्वमत्यादरात् ॥ ५ ॥
स्वामिंस्ते गगनाग्रलग्नशिखरः प्रासाद एव ध्रुवं
हन्तुं पापभटानतीव विकटान् यद् गाढबद्धोद्यमः ।
दण्डं चण्डममुं बिभर्त्ति तदयं तत्खण्डनायोत्कटं
तद्बन्धाय च पाशमप्यतिलसल्लम्बध्वजव्याजतः ॥ ६ ॥
देव ! त्वन्मुखवीक्षणक्षणभवद्रोमाञ्चसंवर्मित-
स्त्रैलोक्योत्कटरागमुख्यसुभटान् शत्रून् यदत्राङ्गभृत् ।
ध्यानास्त्रेण जयत्यहर्निशमतः शत्रुञ्जयेत्याख्यया
विख्यातस्तव भूधरोऽपि भगवन् ! लोकाग्रचूडामणे ! ॥७॥

श्रीधर्मोज्ज्वलनैकमण्डलमिलन्मानातिगप्राणिनां
मायद्दुष्कृतमण्डलं कुलमिव क्रीडत्कुरङ्गावलेः ।
मन्ये त्रासयितुं त्वदीयभवनद्वाराङ्गणे रङ्गतो
व्याघ्रीयं स्थितिमादधाति सकलप्राचीनबर्हिःस्तुत ! ॥८॥
राष्ट्राणि प्रचुराण्यपीह भुवने जाग्रत्युदग्रश्रिया
नैकस्यापि परं सुशब्दघटना प्राग् जाघटीति प्रभो ! ।
किन्त्वेतज्जगदद्भुतां सुभगतालक्ष्मीं समासीसदत्
त्रैलोक्याभरणेन देव ! भवता ख्यातं सुराष्ट्रेत्यतः ॥९॥
स्वामिंस्त्वन्मुखमण्डलोल्लसितरुक्पूरैः प्रभातोदये
स्पृष्टा ये न हि दुर्गतिं स्पृशति तान् वन्दारुजन्तूनिह ।
ये चोपत्यप्रबलप्रतापतपनोद्दीप्रप्रभाचक्रकैः
श्लिष्टाः श्लिष्यति तान् किमञ्जनघनश्यामा तमिस्रावली ॥१०॥
मन्ये सिद्धरसः प्रसिद्धमहिमा स्वामिंस्त्वदीयोल्लस-
त्पादाम्भोरुहसम्भवद्दशनखप्रेङ्खत्विषां मण्डलम् ।
यत्स्पृष्टाः किल कोटिशोऽपि मनुजाः कल्याणलक्ष्मीं नवा-
मासाद्याभरणीभवन्ति भगवन् ! सिद्धयङ्गनाया यतः ॥११॥
पीयूषद्रववर्षणं नयनयोस्त्वद्वक्त्रसंवीक्षणं
सञ्जातं प्रकरोति देव ! भगवन् ! भाग्योत्तमत्वं मयि ।
किं नोल्लासयति प्रकाशितजगच्चित्तो वसन्तोत्सवः
क्रीडत्कोकिलमण्डलीषु मधुरारावस्य लीलायितम् ॥१२॥
नान्यो रत्नमहीधरोऽस्ति भुवने सोऽप्यस्तु वा किं सता
तेन प्रस्तरखण्डमण्डितभुवा रत्नाचलः किन्त्वयम् ।

ख्यातस्ते धरणीधरः प्रविलसन् यत्रैष चिन्तामणि-
स्त्वं नाथ ! प्रथयस्यभीष्टमखिलं कालेऽधुनाऽङ्गिनाम् ॥१३॥
कीर्त्तिस्तम्भयुगं पदौ विजयिनौ धर्मस्य कल्पद्रुमौ
पाणी तत्सरलाङ्गुलीततिरियं स्वःशाखिनां पल्लवाः ।
स्कन्धौ बन्धुरशातकुम्भकलशौ सौवर्णपट्टोहि हृत्
कण्ठः कम्बुरयं स्वशब्दविधिना विश्वस्य कल्याणकृत् ॥१४॥
चन्द्रः सान्द्ररुचिर्मुखं नयनयोर्युग्मं नवाम्भोरुहं
कर्णौ काञ्चनशुक्तिके मुकुरयोर्द्वन्द्वं कपोलस्थली ।
नाशाम्भोरुहनालमद्भुतमिति त्वद्रूपलक्ष्मीं प्रभो !
प्रातर्मङ्गलकारिणीं प्रतिदिनं पश्यन्ति धन्या जनाः ॥१५॥ युग्म
कालेऽस्मिन् भवसम्भवश्रमभरैरापीड्यमानाङ्गिनां
स्वामिंस्त्वं निजदर्शनामृतरसैरानन्दनिस्यन्दिभिः ।
तापव्यापमपाकरोषि सकलं वीक्ष्येति भूमण्डलात्
स्वःपातालतले सुधाप्यचकलन्निर्हेतुकावस्थितिम् ॥१६॥
त्वं भक्तिप्रणमन्नरासुरसुराधीशार्च्यमानः प्रभो !
तापं खण्डयसि प्रचण्डमपि यज्जाड्यं च जन्मस्पृशाम् ।
तस्मात् तद्घटने पटुत्वकमलामालिङ्गमानाविभौ
सूर्याचन्द्रमसौ त्वदीयतुलनामासादयेतां कथम् ? ॥ १७ ॥
रत्नालङ्कृतिभारिणी नयनयोर्नव्यामृतोद्गारिणी
मायन्मोहविदारिणी स्फुरदुरुज्योतिःकलाधारिणी ।
स्फूर्जन्मङ्गलकारिणी त्रिजगतामानन्दविस्तारिणी
मूर्तिस्तेऽघनिवारिणी जिनपते ! दत्ते मनोवाञ्छितम् ॥१८॥

रम्योऽशोकतरुः स्फुरत्परिमलाकृष्टालिमालाकुला
　वृष्टिः सौमनसी सुरैर्विरचिता दिव्यो ध्वनिर्बन्धुरः ।
चञ्चच्चामरमण्डलं स्फुरदुरुश्वेतातपत्रत्रयी
　भास्वद्रत्नगणाऽनणुद्युतिभरैराभासि सिंहासनम् ॥१९॥
व्योमन्यब्द इवातिमन्द्रमधुरध्वानो नदन् दुन्दुभि-
　मार्तण्डद्युतिमण्डलाभममलं भामण्डलं चाद्भुतम् ।
इत्येतां भुवनेषु विस्मयकरीं त्वत्प्रातिहार्यश्रियं
　दृष्ट्वा कस्य जगत्त्रमस्य ! न भवेत् प्रौढप्रमोदोदयः॥२०॥युग्मम्।
श्रीमन्नाभेयदेव ! प्रथमजिन ! जगन्मानसाम्भोजहंस !
　प्रौढश्रीपुण्डरीकाचलविमलतरोत्तुङ्गशृङ्गावतंस ! ।
एतां यस्तावकीनस्तुतिकुसुमस्रजं स्थापयेत् कण्ठपीठे
　सोत्कण्ठाः सम्पदस्तं त्रिजगदधिपते ! वृण्वते विश्वशस्याः ॥२१॥
इति श्रीशत्रुञ्जयस्तवनं श्रीभुवनसुन्दरसूरिकृतम् ।

---

[ ४२ ]

श्रीभुवनसुन्दरसूरिसन्दृब्धं

विविधयमकमयं

## श्रीचतुर्विंशतिजिनस्तवनम् ।

---

विजयते वृषभः स शमास्पदं जिनपतेरिह यस्य शुभं पदम् ।
प्रणमतां विपदोऽपि हि सम्पदन्त्यविकलं विकलङ्करमापदम् ॥१॥

विपुलमङ्गललक्ष्मिनिकेतनं स्तुतिपरामरचारणकेतनम् ।
अजिततीर्थपते ! पदयामलं तव भजे स्थिरसौख्यमयाऽमलम् ॥२॥
मदनमर्दन ! सम्भव ! ते श्रियेऽमदनरेन्द्रनताङ्घ्रियुगं मुदा ।
प्रमदनिर्भरदेवगणस्तुताऽप्रमदयोपशमादिगुणालय ! ॥ ३ ॥
शिववधूवरहारविनायकप्रभ ! भवन्तमघाहिविनायक ! ।
भजति तुर्यजिनं भुवि ना यकः स भवतीहितवस्तुविनायकः ॥४॥
विजयते सुमते ! जनताऽऽरकं तव मतं विदधद् भुवि तारकम् ।
निजयशस्ततिनिर्जिततारकं महिमधाम विभो ! निहतारकम् ॥५॥
कमलमीप्सुरहं निहताखिलाकमल ! ते चरणं शरणं श्रितः ।
कमलया कलया कलितानिशं कमललाञ्छन ! देव ! धरात्मज ! ॥६
जिन ! सुपार्श्व ! सुपर्वसभाजन ! प्रबलहर्षविकाशिसभाजन ! ।
प्रशमनाममहारसभाजन ! त्वमसि शस्यगुणो न सभाजन ! ॥७॥
जिनपते ! क्षणदेश्वरलाञ्छनाऽखिलविचक्षणदेशनरस्तुत ! ।
कृतशिवेक्षण ! देव ! सुखावलीः कुरु सदा क्षणदेश ! दयानिधे ! ॥
विहरति त्वयि भूमितले विभाविह रतिः समभूत् सुविधे ! सताम् ।
विहरति प्रथितां भवभीमतां विहर तिग्मकरादिसुरस्तुतः ॥९॥
गुरुरुचे रुरुचे तव यो मते जिन ! भवे दभवेदशिवो ह्यसौ ।
विनयिने नयिने प्रणतोऽस्मि तत् शुभवते भवते भव शीतल ! ॥१
सुनयनं नयनन्दिसरोरुहोद्भवरविर्वरविष्णुसुतं जिनम् ।
सुविभवं विभवं जनता श्रिता सुविशदेऽविशदेव पदे ध्रुवम् ॥११।
अकमनङ्गमनन्तमितं सदाप्यनवमं नवमं रसमाश्रितम् ।
जितमदं तमदम्भगिरं जिनं सजयया जयया जनितं स्तुवे ॥१२॥

विमल ! ते मलतेऽमलतेजसः शिवरसं वरसंवरसङ्गतम् ।
सुचरणं चरणं च रणं च यः स्थिरतमारतमार तमाप चित् ॥१३॥
जिनमनन्तमनन्तचितं भजेत् सुखमपारमपारमितं च यः ।
शिवरमा वरमाश्रयमाश्रयेत् तमुदितं मुदितं स्थिरसम्पदा ॥१४॥
अवनतामर ! तामरसाननं प्रवरमङ्गलमङ्गलता नृणाम् ।
जननता नमतादिह सुमतासुतमसौ तमसौघदभेदिनम् ॥ १५ ॥
नमत शान्तिजिनं पदयोर्लुठत्सुरवरं स्वरञ्जितसज्जनम् ।
स्फुरति यस्य सुधर्मकथावनी सुखचिता खचिता मणिमौक्तिकैः ॥१६
सुरपतिस्तव कुन्थुविभो ! गुणान् सुरपतिश्रमनारतमेव यत् ।
सवितरस्यघतामसखण्डने स वितरस्यतुलं च सुखं नृणाम् ॥१७॥
मदनदर्पविनाशसुदर्शनं प्रमदनिर्भरतातसुदर्शनम् ।
अरजिनं सुखकारणदर्शनं सुजन ! हे भज पङ्कजदर्शनम् ॥१८॥
जिनपतिं बहुलक्षमया चितं प्रददतं वसुलक्षमयाचितम् ।
नृपतिकुम्भभवं तिमिगजितं प्रणमताद्भिदुरसुराजितम् ॥१९॥
मुवनतारक ! नारकलाः श्रयन् वरसभासित ! भासितभूतल ! ।
प्रशमनाशय ! नाशय दुष्कृतं जिन ! सुमित्रज ! मित्रजनावतेः॥२०॥
अघनि(वि)शासनशासन ! हर्षदः प्रबलदर्पकदर्पकृताजितः ।
समक्षमानक्षमानससतोषवृद्धिजयनन्दन ! नन्द नयाश्रित ! ॥२१॥
धृतरसागतरसा दधतो मुदां वरचयं रचयन्ति जनैर्महम् ।
सुरजना रजनार्थव यस्य तं स्तुत तमांतनमाश्रितनेमिनम् ॥ २२ ॥
स्मरहतो प्रभवन्तमनारतं जिनपपार्श्वमवन्तमनोरतम् ।
गुणजितेन्दुभवं तप आश्रयं गतभवं तमहं विभुमाश्रयम् ॥ २३ ॥

निजगिराऽमृतयूपसुधाकरं गुणविनिर्जितपूर्णसुधाकरम् ।
जिनसजातरसं महिलासु तं प्रणिदधे प्रयतस्त्रिशलासुतम् ॥ २४ ॥
भुवनसुन्दरसूरिवरस्तुताः सकलकेवलिनो वलिनो गुणैः ।
भुवि भवन्तु विभास्वरसम्पदे स्फुटमहोदयिनो दयिनो मुदे ॥२५॥

इति विविधयमकमयचतुर्विंशतिजिनस्तवनम् ।
श्रीभुवनसुन्दरसूरिपादैः कृतम् ॥

[ ४२ ]

मन्त्राक्षरगर्भित

## श्रीपार्श्वजिनस्तोत्रम् ।

ॐ ह्रीँ श्रीँ [ अर्हं ] धरणोरगेन्द्रमहितः श्रीसप्तभोगोल्लस-
न्माणिक्यावलिकान्तिसञ्चयदिनध्वान्तप्रपञ्चप्रभुः ।
श्रीवामोदरचारुपङ्कजवनीमार्तण्डबिम्बायते
विघ्नश्रेणिविमन्थनो विजयते श्रीपार्श्वनाथो जिनः ॥ १ ॥

ॐ कारैः ह्रींकारः श्रींकारैर्वर्णमन्त्रसङ्घातैः ।
हृत्पुण्डरीकपीठे स्मरत श्रीपार्श्वतीर्थकरम् ॥ २ ॥
ध्यायन्तिस्फटिकश्वेतमभिप्रेतं परं पदम् ।
ह्रींकारश्रीवशीकारचतुरं पार्श्वतीर्थपम् ॥ ३ ॥
लभते सकलामृद्धिं बुद्धिं सिद्धिं सपुत्रताम् ।
प्राज्यं राज्यं कलत्रं च सम्यक् तत्त्वं सुनिश्चलम् ॥ ४ ॥

निःशेषमन्त्राक्षरचारुमन्त्रं
श्रीपार्श्वतीर्थेश्वरनामधेयम् ।
सदा स्मरामः प्रमुदा महामः
प्रीत्या नमामः कुशलं लभामः ॥ ५ ॥

[ ४३ ]

श्रीजिनप्रभसूरिविरचितं

यमकमयं

## श्रीपार्श्वजिनस्तवनम् ।

श्रीपार्श्वं भावतः स्तौमि महोदधिमगर्हितम् ।
उद्धरन्तं जगद् दुःखमहोदधिगर्हितम् ॥ १ ॥
दग्गोचरं भवान् येषां प्रियङ्गुरुचिरायते ।
प्राप्नुवन्ति सुखं नाथ ! प्रियं गुरु चिराय ते ॥ २ ॥
त्वां चतुःषष्टिरिन्द्राणां तुष्टावामेयवैभवम् ।
समूलकाषं कषितुं तुष्टा वामेय ! वै भवम् ॥ ३ ॥
पवनीभवितुं कर्मवनदक्षेऽर्पणा यते ।
को ना हि कमले नम्रावनदक्षे पणाय ते ॥ ४ ॥
वन्द्यस्त्वं-न्यतेर्मुक्त ! वैनतामरसासनः ।
स्वप्नेऽपि स्वदते तेन विनतामरसाननः ॥ ५ ॥

१ मनदक्षपणायते । क । २ विनिताभरसाननः । क ।

भुवि स्तुतो येन भवानिन्दीवरदलासितः ।
स्वकीर्तिपूरस्तेनेन्दुर्निन्दी वरद ! लासितः ॥ ६ ॥
अपि व्यामोहिताशेषसुरदानवमानवाः ।
न त्वामचुक्षुभन्नारी सुरदा नवभा नवा ॥ ७ ॥
फुल्लफणिफणारत्नरुचिराजितविग्रहे ।
त्वयि प्रीतिः स्फुरतु मे रुचिरा जिनविग्रहे ॥ ८ ॥
द्युपतिमुकुटप्रोद्घृष्टांह्रि जगत्कमलाकर–
द्युपतिमनघं स्तुत्वेति त्वां कृताञ्जलिरर्थये ।
प्रशमजलधे ! मह्यं सद्य प्रमद वितार्यतां
प्रशमनविधौ भावारीणां जिन ! प्रभविष्णुता ॥९॥

[ ४४ ]

मुनिरत्नश्रीचतुरविजयविरचितं

## श्रीपार्श्वनाथस्तोत्रम् ।

जिनराज ! सदा तव मे शरणं शरणागतवत्सल ! पार्श्वविभो ! ।
गुणिनां विदधासि शिवं सुभगं सुभगेत्यवगत्य ततस्तरसा ॥१॥
अहमागत आप्त ! भवचरणं चरणे मम देहि मतिं विमलाम् ।
विमलं मम मानसमीश ! कुरु यदि चेत् तव दानगुणोऽवितथः ॥
गुणिनां भविनां विभवं कुरुषे किमु चित्रमिदं तदहो मुनिप ! ।
मुनिपापमिमं यदि तारयसि भवतीश ! तदा तव तारकता ॥३॥
मदमानयुतं व्यसनैर्व्यथितं मथितारिगणेश ! विधाय कृपाम् ॥
समये भणिताच्च रणाद् विमुखं जिन ! तारय मां गुणहीनमिमम्
चरितं मम तीर्थपते ! गहनं भणतीति नियोज्य करौ चतुरः ।
भवसागरपर्यटनं परमं परमेश्वर ! वारय वारय मे ॥ ५ ॥

य एव निध्यायति मानसस्थमन्तर्दृशा त्वां जिनराजहंसम् ।
स एव साक्षात्कुरुते समग्रं लीलायितं सद्गतिसम्पदस्ते ॥ ८ ॥
जगन्मतं त्वन्मतमत्र येषां न सम्मतं हन्त हताशयानाम् ।
प्रभातविद् घूकविहङ्गमानां हि केवलालोकबहिःस्थितास्ते ॥ ९ ॥
क्षुद्राशयैः कैश्चिदनाश्रितस्याप्यादेयता देव ! न हीयते ते ।
किं मक्षिकोपेक्षितचन्दनस्य प्रयाति सौरभ्यगुणः कदापि ? ॥१०॥
जगद्गुरो ! गौरवमेव तत् ते कुदृष्टिभिर्न प्रतिपद्यसे यत् ।
न येन तेनाभरणीकृतस्य महार्घताऽपैति महामणेः किम् ॥ ११ ॥
कुदृष्टिरागग्रहिला वराका ये त्वां जगन्मित्रममित्रयन्ति ।
ते कल्पवृक्षं विषवृक्षयन्ति चिन्तामणिं कर्करयन्ति मूढाः ॥ १२ ॥
त्वदास्यलावण्यवरेण्यलक्ष्मीं निरीक्ष्य नेत्राणि समुल्लसन्ति ।
हर्षप्रकर्षेण सदृष्टिभाजां चकोरकाणामिव चन्द्रलेखाम् ॥ १३ ॥
त्वत्पादसेवारसिकं मनो मे नाऽन्यत्र तोषं लभते हरादौ ।
विहाय वा मञ्जरिमञ्जुमाम्रं किं कोकिलः क्रीडति कर्णिकारे ? ॥१४॥
निशम्य कर्णामृतमर्हतो वचो न रोचते मे कुवचः कुतीर्थिनाम् ।
निपीय को वा मधुरं गवीपयः पिपासति क्षीरमिहार्कशाखिनः ॥१५॥
अर्शोऽङ्कुरक्षयभगन्दरदुष्टकुष्टमुख्या रुजः क्षयमयन्ति तव प्रसादात् ।
सर्पन्ति सर्पनिवहा भुवि तावदेव यावन्न हि स्फुरति गारुडपक्षवातः ॥
शार्दूलपन्नगमतङ्गजचौरमुख्याः स्वाध्यायतो नहि पराभवितुं क्षमन्ते ।
किं कान्तिमन्मणिशशिप्रमुखान् पदार्थान् व्याप्नोति सान्द्रमपि सन्तमसं कदाचित् ? ॥ १७ ॥

भयङ्करव्यन्तरभूतशाकिनी पिशाचवैतालकरालरक्षसाम् ।
भयानि नश्यन्ति तव स्मृतेर्नृणां यथैणयूथानि मृगेन्द्रहुङ्कृतेः ॥१८॥

धन्यास्त्रिसन्ध्यमपि केचन भक्तिभाज-
स्त्वां पूजयन्ति विधिवद् विविधप्रकारैः
द्रव्यार्चयापि परमेश्वर ! पूजितस्त्वं
भव्यात्मनां भवसि भावसमाधिहेतुः ॥ १९ ॥

विश्वातिशायिगुणमौक्तिकभद्रकुम्भ ! लोकश्रियः शिरसि शाश्वतभद्रकुम्भ !
सक्रूरमुद्गरदलीकृतकामकुम्भ ! श्रीपार्श्वदेव ! जय कामितकामकुम्भ !

नमः शमश्रीसुभगाय तुभ्यं नमः समस्ताङ्गिहिताय तुभ्यम् ।
नमः क्रमप्रह्वसुराय तुभ्यं नमस्तमःस्तोमहराय तुभ्यम् ॥२१॥

आरोग्यदीधितिमनोरमता तदङ्गे सौभाग्यभाग्यविजयाभ्युदयश्च तस्य ।
वाणी च तस्य वदने सदने च लक्ष्मीः पार्श्वेश्वरस्य वरिवस्यति
योऽङ्घ्रिपद्मम् ॥ २२ ॥

अद्याजगाम मम कामगवी नवीना
कल्पद्रुमोऽपि फलितो मिलितो ममाद्य ।
चिन्तामणिश्च मम पाणितले निलीनः
श्रीपार्श्वदेव ! तव संस्तवनानुभावात् ॥२३॥

एवं श्रीपार्श्वजिनं श्रीमज्जिनचन्द्रसूरिगुरुशिष्यैः ।
श्रीजिनसमुद्रसूरिभिरभिष्टुतोऽभीष्टफलहेतुः ॥ २४ ॥

श्रीजेसलमेरुमहादुर्गे विधिचैत्यभूषणं भगवान् ।
श्रीविधिसङ्घाभ्युदयं दिशतु श्रेयःश्रियां सद्म ॥ २५ ॥

---

[ ४६ ]

# श्रीकुङ्कुमरोलापार्श्वजिनस्तवनम् ।

कुङ्कुमरोलमिधं पार्श्वं जालोरपुरसंस्थितम् ।
श्रेयःश्रेणिलतामेघं संस्तुवेऽहं जिनेश्वरम् ॥ १ ॥

ॐ ह्रीँ श्रीँ अर्हँ संयुक्त ! श्रीपार्श्व ! जगदीश्वर ! ।
त्वन्नामस्मरणाद् भक्तलोकानां स्युर्महर्द्धयः ॥ २ ॥

सुरासुरेन्द्रसन्दोहसंसेव्यपदपङ्कज ! ।
जगद्ध्येय ! गुणामेय ! जय त्वं करुणानिधे ! ॥ ३ ॥

पीनोऽहं पापपङ्केन हीनोऽहं गुणसम्पदा ।
दीनोऽहं तावकीनोऽहं मीनोऽहं त्वद्गुणाम्बुधौ ॥ ४ ॥

दासः प्रेष्यः प्रसादार्थी सेवाहेवाकिसेवकः ।
किङ्करस्तावकीनोऽस्मि तत्प्रसीद मयि प्रभो ! ॥ ५ ॥

अश्वसेनमहीपालकुलपाथोजभास्करः ।
वामाकुक्षिसरोहंसः पार्श्वोऽसौ भवतान्मुदे ॥ ६ ॥

इत्थं पार्श्वजिनेन्द्रः कुङ्कुमरोलाभिधानविख्यातः ।
स्वर्णगिरिशिखरमण्डनमानन्दं वः सदा देयात् ॥ ७ ॥

[ ४७ ]

समस्यामयं

# श्रीनवखण्डपार्श्वजिनस्तवनम् ।

श्रीपार्श्वं नवखण्डाख्यं तं स्तुवे हर्षसंयुतः ।
दीपश्रेणीयुते यस्य ' गेहे दीपालिका दिवा ' ॥ १ ॥
यस्याग्रे दिव्यनारीणां नृत्ते वृत्ते मनोहरे ।
विराज 'दिनारम्भे शतचन्द्रं महीतलम्' ॥ २ ॥
जन्माभिषेके सुरशैलमौलौ देवेन्द्रक्लृप्तात् सुतगोविषाणैः ।
सत्यापितं क्षीरजलं क्षरद्भि'र्गोशृङ्गतः क्षीरसमुद्भवो यत् ' ॥ ३ ॥
चित्तान्तरस्थे त्वयि देवदेव ! दुःखं कथं नो भजते विरामम् ।
रात्रौ दिवा यः सततं विरोधो 'दीपे करस्थे तिमिरेण बाधा' ॥४॥
भवे दौःस्थ्यदारिद्र्यदुष्कर्मभीमे कलौ भ्राम्यता भूमिमध्ये भ्रमेण ।
पदाब्जं त्वदीयं विभो ! यन्मयाप्तं 'प्रफुल्लं करीरे सरोजं हि दृष्टम्' ॥
त्वयि प्रभो ! दृष्टिपथं समागते मनो मदीयं भजते महाऽरतिम् ।
तथैव जन्तोर्बहुपापयोगतः 'समुद्रमध्ये किल धूलिसम्भवः ' ॥६॥
त्वद्दर्शनं नाथ ! मयेदमाप्तं दुःप्रापमन्तर्भवसन्ततीह ।
शुभाग्ययोगाज्जगदीश ! तस्मात् 'पङ्गुः प्रयातो गिरिमेरुशृङ्गम् ' ॥७॥
भवाब्धिमध्ये भ्रमतां स्वकर्मतो जिनेन्द्र ! राज्यादिसुखं न दुष्करम् ।
सुदुर्लभं दर्शनमत्र ते यथा 'पलाशपुष्पे सहकारमञ्जरी ' ॥ ८ ॥
त्वयि विभो ! समदः कमठो घनं सजलभारभृतं विपुलं यदा ।
रचितवान् जगत् किल तस्थौ 'न रजनी न दिवा न दिवाकरः'॥९॥

घोराट्टहासकलिताः प्रचुराः पिशाचा
व्यालास्तथा प्रवलभूतगणाः सुरेन्द्राः ।
दैत्याधिपेन विकृता भयहेतवे यत्
'स्वर्णाद्रिराप व्यजनानिलतः प्रकम्पम्' ॥ १० ॥

त्वच्छासनं दुरितभारहरं वरेण्यं
मूढा नराः परमतत्त्वविचारशून्याः ।
ये शासनान्तरेण सदृशं गणयन्ति तेऽत्र
'मुक्ताफलानि वदरैः परिवर्तयन्ति'॥ ११ ॥

देवेशमज्जनले सरसे सुरम्यं
कर्पूरसुन्दरतरे गुरुकेशराढये ।
विम्बं निरीक्ष्य किल मत्तदृशाः सुरङ्गा-
'श्चन्द्रं महीतलगतं मधुपाः पिवन्ति' ॥ १२ ॥

स्वामिन् ! प्रसीदादिश किङ्करे मयि सौम्यां दृशं देहि कृपां विधेहि च
भावी कदा मे तव सङ्गमो यथा 'क्षाराकरे वा घनसारदर्शनम्' ॥१३

मोहान्धा ये मदनजडिमाक्रान्तचित्ता अभव्याः
काले चास्मिन्निखिलतिमिरैर्मुक्तमास्यं त्वदीयम् ।
पादाब्जं वा भवति सुलभं पार्श्वमायुः किमेषां
'वन्ध्याजोऽन्धः कुहुनिशि रविं पश्यति व्योमपद्मम्' ॥१

यः पावित्र्यभरं तनोति सुमहान् यो दानशृङ्गारयुक्
यश्चान्तं न लभेत मुक्तिदयितो मालिन्यवान् यश्च न ।

---

१ अत्र च्छन्दोभङ्गः ।

सर्वेषां प्रियकारक ननु विभो ! देवाधिदेव ! त्वतो
'गङ्गावद् गजराजवद् गगनवद् गाङ्गेयवद् गेयवत्' ॥१५॥
इत्थं श्रीनवखण्डपार्श्वजिन ! यो भक्त्या मया संस्तुतो
भव्यानां दुरितापहारनिपुणो देवेन्द्रवन्द्यो विभुः ।
काले दुःखमये प्रभावभवनं गन्धारवेलातटे
संस्थः सिद्धिसमृद्धिवृद्धिजनको भूयात् समस्यास्तुतः ॥

---

[ ४८ ]

## श्रीहेमविमलसूरिशिष्यआनन्दमाणिक्यविरचितं

## श्रीनवखण्डपार्श्वजिनस्तवनम् ।

---

विपुलमङ्गलमण्डलदायकं जिनपतिं प्रभुपार्श्वसुनायकम् ।
सकलसम्पदवृद्धिविधायकं नमत रूपरमासुमसायकम् ॥ १ ॥
रासक— कमठमहासुरमदभरभञ्जन ! भविकजनावलिमानसरञ्जन
खञ्जननयनविशाल ! तु जयु जयु ॥ २ ॥
श्रीअश्वसेनभूमीपतिनन्दन ! पापतापसन्तापनिकन्दन ! ।
चन्दन शीतलवाणि ! तु जयु जयु ॥ ३ ॥
असमसंसारपयोनिधितारण ! विषमगहनगतिवारण ! ।
चारणकर्ममहीन ! जयु जयु ॥ ४ ॥
निरुपमसकलमहागुणधारक ! सेवकलोकसमीहितकारक ! ।
तारकव्रजकलिताङ्ग ! तु जयु जयु ॥ ५ ॥

काव्यम्—

पातालधिपशेषनागवदलं जिह्वासहस्रद्वयं
वक्त्रे स्यादपि यस्य बुद्धिरतुला जीवस्य तुल्या तथा ।
सोऽपि श्रीजिनपार्श्वराज ! तव यान् स्तोतुं भवेन्नो क्षमः
सङ्ख्यातीतगुणानहो जडमतिः स्तोष्ये कथं तान् प्रभो ! । ॥६।

रासालुद्धड—

रसनाविंशतिशतं यदि वदने वदने वचनविलासे ।
नागाधिप इव भवति निकामं कामं करसोल्लासे रे ॥ ७ ॥
देवसूरीश्वर इव यदि हृदये हृदयेश्वरसुविकाशे रे ।
विलसति विमलमतिर्जनजीवन ! पीवन तव गुणदासे रे ॥८।
यदि बहुसागरजीवितमानं मानद ! भवति संसारे रे ।
अमरनायक इव घनधनसहितं हितकर ! भव दत्रवारे रे ॥९
तदपि तवामलगुणगणराशिं वासितभुवनविचालं रे ।
नोतुमलं न भवामि हि जिनवर ! नवरससरसविशालं रे ॥१०

काव्यम्—

श्रीसर्वज्ञ ! जिनेश ! तावकलसत्पादारविन्दद्वयं
प्रातर्यो नमति प्रभो ! प्रमदतो लक्ष्मीविलासालयम् ।
प्रीतिप्रेमवशादवश्यमवशा सेवेत सेवापरा
पद्मा पुण्यपरंपरा परनरं तं सर्वकालं कलम् ॥ ११ ॥

आढेआ—

कमलाकेलिनिवास ! शमरसविहितोल्लास !
वासवनिकरपते ! जय जय विमलमते ! रे जिन ! जिन ! ॥१

वामादेवीजननीजात ! प्रभावतीवर ! गतिताता ! ।
सुखकर ! विनतजने चरणपवित्र ! मुने ! जिन ! जिन !॥१३॥
मोहनवल्लीकन्द ! निर्मितनयनानन्द ! ।
सुन्दरसदयमते ! त्वयि मनो मे रमते जिन ! जिन ! ॥ १४ ॥
उपशमरसशृङ्गार ! जगतीयुवतिशृङ्गार ! ।
शं कुरु मे भजते भवसागरविरते ॥ १५ ॥

काव्यम्—

वाणी सैव मनोहरा ननु यया त्वं गीयसे नित्यशः
श्लाघ्या दृष्टिरियं यया च नितरां त्वं दृश्यसेऽहर्निशम् ।
हस्तः शस्ततरः स एव फलदो यः पूजयेत् त्वां जिनं
ध्यानं धन्यतमं तदेव सुखदं यस्मिन् प्रभो ! त्वं भवेः ॥१६॥

राग—

विषयमहारसपूरितदूरितधर्ममतिम् ।
शरणागतमथ मां जिन ! अधुनैव कुरु सुमतिम् ॥१७॥
मदनमहोरगसुविषमविषमलभरितहृदम् ।
त्वं जिननायक ! मां प्रति सम्प्रति दिश सुपदम् ॥१८॥
क्रोधदवानलकोलितमीलितनयनयुगम् ।
कुरु वचनामृतरोपगतोरगतः सुभगम् ॥ १९ ॥
लोभप्रयोगपराविलखण्डितधर्मधनम् ॥
मामथ जिनवर ! पालय लालय सर्वदिनम् ॥२०॥

काव्यम्—

त्वां ये नाथ ! नुवन्ति सादरतया निन्दन्ति ये पापिन—
स्तेषां वाञ्छितसम्पदं च विपदं घोरां ददासि स्फुटम् ।

नीरागोऽपि गतस्पृहोऽपि विगतद्वेषोऽपि सन्नीयसे
विज्ञैश्चित्रमदोऽथवा हि महतां माहात्म्यमीदृग्विधम् ॥२१॥

त्रिपदी—

श्रृङ्गारसकला नारी सौभाग्यसुन्दरी रे
जाने वरसुरी रे अभिनवयौवन हरिहरी रे॥ २२ ॥
कुचभरनमदङ्गी सुरङ्गनिरङ्गी रे।
प्रेमपुष्पभृङ्गी रे विरचितमृगमदभङ्गी रे॥ २३ ॥
शीलशालि सदाचारा सततमुदारा रे।
सुधर्मविचारा रे जिनगुणगानसुतारा रे ॥ २४ ॥
आनन्दपूरितबाला तव सुममालाभिः।
विविधविशालाभी रचयतिपूजां वरकला रे ॥ २५ ॥
एवं संस्तुतिगोचरं जिनवरं नीत्वा गुणैर्भासुरं
त्वां श्रीमन्नवखण्डपार्श्व ! सुतरामेकं तु याचे वरम्।
देया मे गुरुराजहेमविमलं त्वं सर्वसौख्यास्पदं
ज्ञानं मान्यतमं महोदयमना आनन्दमाणिक्यदम् ॥२६॥

---

[ ४९ ]

श्रीलक्ष्मीलाभप्रणीत

## श्रीनवपल्लवपार्श्वनाथस्तोत्रम् ।

---

उद्यत्फणामुकुटभूषितमस्तकान्त ! त्रैलोक्यलोकनयनामृतपूर्णचन्द्र ! ।
विख्यातमङ्गलपुरस्थित ! वीतराग ! मां पाहि पाहि नवपल्लवपार्श्वनाथ!

कन्दर्पराजघनमानतमोवितानं प्रद्योतनामलकलानिलयाब्जनेत्र ! ।
शुद्धेन्द्रनीलमणिनीलतमालनील ! मां पाहि पाहि नवपल्लवपार्श्वनाथ !२

क्षीरमोरसम्मिलितचन्दनचर्चिताङ्ग ! सद्गाङ्गवारिभृतकुम्भकृताभिषेक ! ।
श्रीमालतीबकुलचम्पकपुष्पपूज्य ! मां पाहि पाहि नवपल्लवपार्श्वनाथ !॥३॥

कादम्बिनीपतिहठद्रुमसत्कुठार ! नीहारगौरजिनशासनपद्मभानो ! ।
काकोदरेन्द्रवरिवस्यितपादयुग्म ! मां पाहि पाहि नवपल्लवपार्श्वनाथ !॥४

ह्रीँकारसारविहिताश्रयसिद्धिलक्ष्मीलाभेन कोमलगिरः स्तवनीयमूर्ते ! ।
वामेय! गेय ! सुरकिन्नरकामिनीभिः मां पाहि पाहि नवपल्लवपार्श्वनाथ!॥५

---

[ ८० ]

## अन्तरीक्षपार्श्वनाथस्तवनम् ।

---

श्रीश्रीपुराभिधपुरप्रथितावतारं प्रोल्लासिमुक्तिकमलाहृदि तारहारम् ।
श्रीपार्श्वनाथ ! जिनराज ! मुदा भवन्तं स्तोष्ये प्रभावभवनं जगतीभवन्तम् ।

स्वामिन् ! निर्मलवालुकाकणगणैर्निर्माप्य सम्पूजिता
　राज्ञा श्रीखरदूषणेन भवतः श्रीपार्श्व ! मूर्त्तिः पुरा ।
श्रीपुञ्जेन नराधिपेन तदनु श्रीश्रीपुरेऽस्थापि या
　सा देव ! प्रतिमा तवेयमनघा दिष्ट्याऽद्य दृष्टा मया ॥२॥

स्वामिन् ! नम्रामरनरपते ! स्नात्रमात्राम्भसा ते-
　ऽद्यापि प्रोच्चैः पुर इह दृशो दीप्यते दीप्रदीपः ।
तस्य स्पर्शादपि च सकलप्राणभाजां समग्रा
　रोगा यान्ति क्षतिमथ भवेद् भाग्यसौभाग्यलक्ष्मीः ॥३॥

नश्यत्सर्वातिशयविभवे म्लेच्छमालावकीर्णे
पूर्णे पापैः प्रवहति कलावत्र काले कराले ।
आकाशस्थां तव जिनपते ! मूर्तिमालोक्य के के
नोच्चैर्भूयुर्भविकनिकरा विस्मयस्मेरनेत्राः ॥ ४ ॥
श्रीमद्वामेय ! देव ! त्रिभुवनजनताचिन्तितार्थप्रदाने
चिन्तारत्नोपमान ! प्रविलसदमलज्ञानसम्पन्निधान ! ।
रागादीन् वैरिवर्गान् हृदि कृतवसतीन् दुःखदौर्गत्यदानून्
स्वामिन्नन्तं नय त्वं मम चरणधनं लुम्पमानानमानम् ॥५॥
आधिव्याधिज्वरभरमहादुष्टकुष्ठप्रमुख्यान्
रोगान् बाह्यानरतिमदनाज्ञानमिथ्यात्वमोहान् ।
अन्तःशत्रूनपि च निखिलांस्त्वां हरन्तं हि दृष्ट्वा
मन्ये धन्वन्तरिरयमगात् क्वापि लज्जां दधानः ॥ ६ ॥
भ्रामं भ्रामं सम्यममितं पूर्वदुष्कर्मयोगा-
ल्लाभं लाभं कुमतिवशतो दुःखलक्षाणि साक्षात् ।
आप्तः प्राप्तस्त्वमिह मयकाऽचिन्तितार्थप्रदाता
शश्वद्विश्वत्रितयजनतात्राणकर्ता जिनेन्द्र ! ॥ ७ ॥
रागद्वेषकषायभीषणमहानक्रौघचक्रग्रह-
ग्राहग्रस्तसमग्रविग्रहभृतां दीनारवैर्व्याकुलं ।
संसाराम्बुनिधौ पतन्तमतुलैर्दुष्कर्मभिर्माऽधुना
रक्ष त्वं जगतीजनव्रजपरित्राणप्रभूष्णुः प्रभो ! ॥ ८ ॥

---

१ निखिलप्राणभाजां समग्रो, रोगव्रातो विलयमयते राजयक्ष्माख्य मुख्यः ॥ क । २ राजयक्ष्म० क ।

प्रस्फूर्जत्फणमण्डलीचलमणिश्रेणीसमाविर्भव–
चञ्चचन्द्रमरीचिसञ्चयपरित्रस्यत्तमोमण्डलः ।
उन्मीलन्नवनीलनीरजदलश्यामाभिरामद्युतिः
श्रेयःश्रेणिमनुत्तरां प्रथय नः श्रीपार्श्व ! विश्वप्रभो ! ॥९॥

लब्धः कामघटः स्फुटं सुरगवी गेहाङ्गणेऽप्यागता
चिन्तारत्नमथोऽचिरात् करतले प्राप्तं चिरत्नैः शुभैः ।
प्राज्यं राज्यमुपार्जितं त्रिजगतां निःशेषसौख्यावहं
यत्तेऽजायत दर्शनं जिनपते ! काले करालेऽप्यहो ॥ १० ॥

मनोवचःकायविजृम्भणैर्भृशं शुभेतरैः पापमुपार्जि यन्मया ।
तन्मे त्वदीयाननपद्मवीक्षणात् क्षयं क्षणाद् गच्छतु न थ ! सम्प्रति॥११

अपारसंसारमहाम्बुराशौ दुरुत्तरे वंभ्रमता मयाऽद्य ।
श्रीपार्श्व ! विश्वत्रयवान्धवस्त्वं लेभे लसत्पोतसमः स्वपुण्यैः ॥१२॥

पचेलिमैः प्राचिकपुण्यपूरैः समुज्जजृम्भे सकलैर्ममाद्य ।
यज्जन्मजातैरपि नैव दृष्टो जिनाधुना दृग्विषयीबभूव ॥ १३ ॥

नेत्रे पवित्रे विशदा च वाणी करौ कृतार्थौ शुचि मानसं च ।
यैर्वीक्षितो नाथ ! गुणैः स्तुतश्च सम्पूजितश्चाऽऽरुचि चिन्तितश्च॥१४

कर्माणि दारुणभवार्णवदुःखदानि
क्षीणानि मेऽद्य सुकृतानि तथाऽऽविरासन् ।
अद्यापि मे जिनपते ! शुभभाग्ययोगो
जागर्ति यत्तव बभूव पदप्रणामः ॥ १५ ॥

इत्थं श्रीपुरभूमिशालिललनाभाले ललामोपमः
श्रीमत्पार्श्व ! जिनारतसर्वज्ञजिनश्चन्द्रोपमाननः ।

भूयो भक्तिभरावनम्रशिरसा नूतो मया भावतो
देहि त्वं निजपादपद्मयुगलोपास्तिं प्रशस्तां मम ॥१६॥

[ ५१ ]

महोपाध्यायश्रीकल्याणविजयगणिविरचितं

## श्रीमगसीपार्श्वस्तोत्रम् ।

परमगुरुश्रीहीरविजयसूरिभ्यो नमः ।

कल्याणकारं कमनीयसम्पदं जिनेश्वरं सद्गुरुपादपङ्कजम् ।
प्रणम्य सिद्धयै महिमोदयं स्तुवे पार्श्वप्रभुं श्रीमगसीविभूषणम् ॥१॥
भवद्गुणानां गणनापि दुःशका जिनेश ! वाचस्पतिनापि धीमता ॥
कुतो हि तेषां तदशक्यवर्णना प्रयत्नसाध्या महतां मम प्रभो ! ॥२॥
तथापि भक्तिस्त्वरयत्यनन्तरा गुणामृतास्वादसमुद्भवा स्तुतौ ।
जिनेन्द्र ! मां कोकिलमाम्रमञ्जरी स्वादो यथा पञ्चमरागजल्पने ॥३॥
असावपूर्वाचरितो विराजते प्रतापभानुस्तव सन्ततोदयः ।
यशःसुधाधामविभूषितः सदा जगत्त्रयीसद्व्यवहारकारकः ॥४॥
समग्रविश्वोद्धरणक्षमो भवाननन्तशक्तिर्भुवमव्यवन्तिषु ।
अधित्वयि श्रीमगसीकृतस्थितावचन्तयोऽपीप्सितसिद्धिसाधके ॥५॥
जगत्त्रयव्यापनतत्परस्य ते प्रतापभानोरतिशायितेजसः ।
सहस्रभानुप्रमुखा इमे सदा प्रकाशिनोऽशा इव बिभ्रति श्रियम् ॥६॥

१ कल्याणावलिमुज्ज्वलां प्रथयतां भास्वत्प्रभावाद्भुतः ॥
इति पाठान्तरे ।

तव प्रतापद्युमणिप्रभाभरापहरितता हस्तगृहीतविष्टप ! ।
परप्रभावाः स्वपदैकचारिणः कृशाङ्गखद्योतगणन्ति सर्वतः ॥७॥
त्वदीयपादाम्बुजषट्पदायितैकतानचेतस्कनराः सुवैभवाः ।
तृणावमन्यन्त इहाद् भुतं सुरद्रुमादिकं चिन्तितसाध्यसिद्धितः ॥८॥
त्रैलोक्यभर्तुस्तव मङ्गलात्मनोऽप्यनन्तशक्तेः पुरतः स्वभक्तितः ।
पूर्वं प्रभाते ननु दर्पणीभवन्निजाधिकारं कुरुते ततो रविः ॥ ९ ॥
सुरद्रुचिन्तामणिकामधुग्मरुद्घटादयो वाञ्छितसिद्धिमङ्गिनाम् ।
त्वदीयजाग्रन्महिमांशवेशनदिवानिशं नाथ ! वितन्वतेतराम् ॥१०॥
प्रणेमुषां प्राणभृतां प्रभो ! भवत्पदारविन्दं स्वरसैकभक्तितः ।
चिन्तामणीकामघटादयोऽप्यमी गृहाङ्गणे सन्ति निदेशवर्तिनः ॥११॥
त्वमेव बुद्धोऽसि विदां वरत्वतः श्रिया श्रितत्वात् पुरुषोत्तमोऽतमाः ।
प्रजापतिस्तत्प्रतिपालनादपि त्वमीश्वरो विश्वसमृद्धिसेवनात् ॥ १२ ॥

शंपोषपोषदशमीदिवसार्हतत्व–
सम्पादकाय निजजन्महोत्सवेन ।
श्रीअश्वसेननृपवंशविभूषणाय
नम्रामरेन्द्रमहिताय विभो ! नमस्ते ॥ १३ ॥
हृदयकमले ध्येयोऽमेयो गुणर्यतयोगिनां
त्रिदशरमणीगेयोऽजेयोऽपरैस्त्रिजगज्जयी ।
महितमगसीपार्श्वाधीशः सतां जनयन् सुखं
भुवि विजयतां स त्रैलोक्यश्रियां कुलमन्दिरम् ॥१४॥

इत्थं निर्भरभक्तियुक्तमनसा भट्टारकग्रामणी-
श्रेणीशेखरहीरहीरविजयश्रीसूरिशिष्याणुना ।
वामाकुक्षिसरोमरालमगसीपार्श्वप्रभुः सन्ततं
कल्याणोदयमातनोतु विजयी देवाधिदेवः स्तुतः ॥

[ ५२ ]

श्रीआल्हादमन्त्रिप्रणीतं

## श्रीपार्श्वनाथस्तोत्रम् ।

श्रीपार्श्वनाथ ! भवतो भवतोयराशिकुम्भोद्भवस्य चरितं किमु वर्णयामि
यः शङ्करप्रभृतयो भृतयोगमुद्रादाधूपिताः कुविषयैर्भुवि तज्जिगीषोः॥१

जाने जिनेश ! नाहं वक्तुमलं प्रसिद्धा
सिद्धान्तवागपि तवागणितं प्रभावम् ।
भक्तिप्रसक्तहृदयस्तदपि स्तवीमि
त्वां भूतलेशमुक्तादिह भूतलेषः (शः) ॥ २ ॥

पापोदयादिह दयाविभवं भवन्तं
ये स्तोतुमेव भविनो भुवि नोत्सहन्ते ।
दारिद्र्यदारुणविषाधिजुषां तु तेषां
जाने जगन्ति भुजगन्ति जिनाधिनाथः ॥ ३ ॥

ध्यातः क्षणं दुरितराशिविनाशकर्त्ता
श्रीपार्श्वनाथ ! हतमोह ! तमोऽपहर्त्ता ।
दुःकर्ममार्गपथिकीभवतोऽपि जन्तोः
सन्तोषपूर्णनभवानभवाय कस्य ? ॥ ४ ॥

सङ्कोचमञ्चति न चन्द्ररुचा न पङ्क
पृक्तं न कण्टकचितं न परागराजि ।
दत्ते पदाम्बुजयुतं तव पार्श्वनाथ !
ध्यानैकतानमनसा घनसान्द्रमोदम् ॥ ५ ॥
भूपा बभूवुरवनौ शतशः सुरूपा
दध्रेऽपि यैर्भुजगतौ जगतोऽपि भारः ।
पापापगापतितले पतयालु विश्वं
विश्वम्भरावलयभूषण ! रक्षसि त्वम् ॥ ६ ॥
ये जन्तवः स्तवपरास्तव विश्वनाथ !
शङ्खेश्वरे सुखमयं समयं नयन्ति ।
ते मातुरातुरवं नहि गर्भवास-
क्लेशं दिशन्ति मनुजा ननु जातमोक्षाः ॥ ७ ॥
पापैर्बलेन तिलतन्दुलितेऽत्र विश्वे
विश्वेश ! केशवशिवादिषु दूषितेषु ।
अद्यापि ते कलियुगेऽप्यनुभावभेरी
सेरीसके सुकृतिनां श्रुतिमूलमेलि ॥ ८ ॥
अम्भोदरूपिणि रुषा कमठे हठेन
वृष्ट्या विकुर्वति भवन्तमवन्तमूर्वीम् ।
लीलातपत्रधरणे धरणेन्द्रनाग-
स्त्वत्पर्युपासिषु विभो ! परमार्गमाप ॥ ९ ॥
श्रीपार्श्वनाथस्य नवस्तवार्चां ( नवां तथार्चां ? )
चकार कारुण्यनिधेर्जिनस्य ।

आल्हादमन्त्री परमप्रमोद-
क्रमोदयद्भक्तिभृतान्तरङ्गः ॥१०॥

[ ८३ ]
श्रीविल्हणकविकृतं

## श्रीपार्श्वनाथस्तोत्रम् ।

जयति भुजगराजप्राज्यफुल्लत्फणाली-
मणिकिरणकदम्बाडम्बरी पार्श्वनाथः ।
भुवनभवनगर्भदिभ्रमोहान्धकार-
च्छिदुरतरुणदीपोद्दीपने कौतुकीव ॥ १ ॥

दिशतु सुकृतिलोकप्रस्तुतश्लाघ्यपूजा-
विलसदगुरुधूमस्तोमसङ्गादिवाङ्गम् ।
दधदभिनवमेघश्यामलं मङ्गलं व-
स्त्रिजगदभयदीक्षादीक्षितः पार्श्वनाथः ॥ २ ॥

कमपि कमठदैत्याकालकालाम्बुवाह-
व्यतिकरविधुरेऽपि श्रीविशेषं दधानः ।
मदनमदविकाराम्भोरुहम्लानिहेतु-
र्जनयति स जिनेन्दुर्युष्मदाशाः प्रकाशाः ॥ ३ ॥

जयति भवदवाग्निव्याप्तिनिर्दह्यमान-
त्रिभुवनजनरक्षादेशकः[1] पार्श्वनाथः ।
घनमयमिव देहं पन्नगस्वामिचूडा-
मणिविरचितचञ्चच्चक्रिचापं दधानः ॥ ४ ॥

---

१ देशितः । २ दीक्षितः ।

कलितगरलशोभाभोगिभर्तुः शरीरे
निजकरकमलाग्रे भृङ्गिमालायमानाः ।
दिशि दिशि मृगनाभीपत्रभङ्गाभिरामा
ददतु शुभगतिं वः पार्श्वनाथस्य भासः ॥ ५ ॥

तरलतरललामानङ्गहाराङ्गहारा
मरसमरसरामारङ्गसारङ्गसारम् ।
नवननवनवोक्तिं (!) दीप्रसिद्धं प्रसिद्धं
नमति नमति मां त्वां कोऽङ्गनामं चनामम् ॥६॥

कुवलयवननीलश्वारुं बिभ्रत् स्वभावं
नवनयघनशैलः पौरुपाद् भ्रष्टमावम् ।
वितरतु मम तानि श्रीजिनेन्दुः सुखानि
श्रितचतुरमितानि श्रीजिनेन्दुः सुखानि ॥ ७ ॥

फणिपतिफणरत्नोद्योतविद्योदितश्री-
र्दिशतु शिवगतिं वः पार्श्वनाथस्य मूर्तिः ।
रणरणकविशेषक्षोभयन्मोक्षलक्ष्मी-
सरभसपरिरम्भात् कुङ्कुमेनारुणेव ॥ ८ ॥

इति जिनपतेः स्तोत्रं चित्रं महाकविविल्हण-
प्रथितमखिलत्रैलोक्यैकप्रकाशनभास्वतः ।
पठति सततं यः श्रद्धावान् मज्जति सज्जनो
भवजलनिधौ सप्रद्युम्नस्थितिं चिरयाश्रितः ॥ ९ ॥

---

१ सरभसगतिरम्भात् । २ भास्वरः ।

[ ५१ ]

# श्रीपार्श्वनाथस्तवनम् ।

---

पार्श्वनाथ ! नमस्तुभ्यं विघ्नविध्वंसकारिणे
निर्मलं सुप्रभातं ते परमानन्ददायिने ॥ १ ॥
विजयस्व जगन्नाथ ! परमात्मन् ! वृषध्वज ! ।
कृत्तिकर्मारिसंहारत्रिदोषत्रिपुरान्तक ! ॥ २ ॥
विजयस्व परब्रह्मन् ! परमेष्टिन् ! पितामह ! ।
जगत्त्रयज्ञानमह्यां सृष्टौ स्रष्टा त्वमेव हि ॥ ३ ॥
विजयस्व केवलश्रीविलाससुभग ! प्रभो ! ।
विश्वरक्षणप्रौढश्रीसम्भारपुरुषोत्तम ! ॥ ४ ॥
सर्वविद्यामन्त्रबीजाक्षरनामाक्षरप्रभो ! ।
श्रीपार्श्वनाथ ! मे नाथः स्यास्त्वमेव भवे भवे ॥ ५ ॥

---

[ ५९ ]

श्रीजिनप्रभसूरिप्रणीतं

# श्रीपार्श्वजिनस्तोत्रम् ।

श्रीपार्श्वं परमात्मानं त्रैलोक्याभयसाक्षिणम् ।
विज्ञानादर्शसङ्क्रान्तलोकालोकमुपास्महे ॥ १ ॥
जिन ! त्वन्नाममन्त्रं ये ध्यायन्त्येकाग्रचेतसः ।
दुराराधामपि श्रेयःश्रियं संवनयन्ति ते ॥ २ ॥
नमस्ते जगतां पित्रे विधात्रे सर्वसम्पदाम् ।
सवित्रे भव्यपद्मानामीशित्रे भुवनत्रयम् ॥ ३ ॥
प्रणताखण्डलोत्तंसस्रंसिमन्दारदामभिः ।
त्रिसन्ध्यं रचिताभ्यर्चं पादाम्भोजं तव श्रये ॥ ४ ॥
भवदीयाननाम्भोजे लक्ष्मीविभ्रमधामनि ।
दृष्टिः सरभसं भृङ्गीभङ्गीमङ्गीकरोतु मे ॥ ५ ॥
सूते यशः श्रियं धत्ते विघ्नव्यूहमपोहति ।
पिपर्ति परितः कामान् प्राणिनां तव दर्शनम् ॥ ६
रक्ष रक्षान्तरारिभ्यः कारुण्यामृतकुण्ड ! माम् ।
त्रैलोक्यत्राणशौण्डस्य गतोऽस्मि शरणं तव ॥ ७ ॥
यः स्तुते त्वामिति श्राद्धः सिद्धिस्तं वृणुते स्यात् ।
श्लोकाद्याक्षरनामानस्तवैनं विदधुः स्तवम् ॥ ८ ॥

[ ५६ ]

## श्रीसोमसुन्दरसूरिप्रणीतं
## यमकमयं
# श्रीपार्श्वजिनस्तवनम् ।

विभाति यद्भास्तरुणारुणारुणा किमङ्गमेघे रुचिरा चिराऽचिरा ।
तवात्र ते पार्श्व ! महेमहे महेश्वरायितुं निर्विपदे पदे पदे ॥ १ ॥

अवचूरिः ।

ययोः पदयोर्भाः—कान्तिः तरुणोऽरुणः–सूर्यः तद्वद् अरुणा–शोणा । ननु अत्र तरुणशब्देन लक्षणया युवा गृह्यते । युवा च सूर्यो न शोणः स्यात्, तरुणस्यैव तस्य शोणत्वात् । मैवम् । तरुणशब्दस्यात्र नूतनार्थ-प्रतिपादकत्वम् । 'तरुणः कुब्जपुष्पे स्यादेरण्डे यूनि नूतने ।' इत्यनेकार्थ-वचनात् ( हेम्यने० श्लो. १९५ ) तथा च न विरोधः । अत्रैवोत्प्रेक्षा 'किमङ्गमेघे' प्रस्तावाद् श्रीपार्श्वस्य शरीररूपे जलदे रुचिरा–मनोहरा चिराचिरा । चिरशब्दस्यानव्ययस्य अकारान्तस्य बहुकालावस्थायिन्यर्थे वर्तनात् स्थिररूपा अचिरा–विद्युत्, कोऽर्थः ? प्रभोर्देहे नीलश्यामयोरेक त्वाज्जलदोपमे । इयं पदयोः द्युतिः स्थिरा विद्युदिव ।

'निरङ्को राकेन्दुः किमु किमुत सौम्यो द्युतिपतिः
किमब्दः शुद्धात्मा किमु सुरतरुर्जङ्गमतनुः ।' (

इत्यादिष्विवात्र सविशेषणमेवोपमानं व्यतिरेकालङ्कारसद्भावात् । हे पार्श्व हे महेश्वर ! परमस्वामिन् ! वयं निर्विपदे–विपद्रहिते मोक्षरूपे पदे–स्थाने अयितुं–गन्तुं तव पदे–चरणे महेमहे–पूजयामः । 'अर्ह मह पूजायाम् णिजि शवि चेदं रूपम् । 'वाचा निशा गिरा' इत्यादिवद् व्यञ्जनान्त त्वादप्यापूर्वादिनो भागुरेर्वैयाकरणस्य मतेन श्रीहेमसूरिसम्मतेन विपच्छब्दा-

विदुर्यदुच्चैः सुकृते कृते कृते प्राप्यं स्वसंवित्कलया लयालयाः ।
तन्मेऽस्त्यघद्रुमकरे करे करे ! त्वय्यद्य दृष्टेति सुखं सुखं सुखम् ॥२॥

अवचूरिः ।

वृषि विपदा । ' तत् तेऽयितुं पार्श्व । ' महेमहे महेशितः । पदेऽप्येकपदे, पदे पदे । ' इति चोत्तरार्धपाठः । अर्थश्च–ते–ते तच्छन्दविशिष्टे ते–तव पदे पदेऽपि–मोक्षरूपेऽपि पदे–स्थाने एकपदे सद्य अयितुं–गन्तुम् वयं महेमहे, महेशितः ! पार्श्व ! ' पादान्ते पदमध्येऽपि न प्रायः क्रियते यतिः । ' ( ; ), इत्यत्र प्रायःशब्दोक्तेरत्र पाठद्वयेऽपि महेमहे इत्यत्र यतिकरणेऽपि न दोषः । पदशब्दः पादेऽपि । परमते क्लीवः ॥ १ ॥

लयः–प्रकर्षप्राप्तं ज्ञानं ' ध्यानकोटिसमो लयः ' इति वचनात् तस्याऽऽलयाः–निलया योगिन इत्यर्थः । कृते–युगे श्रीयुगादीशसमये उच्चैरतिशयेन सुकृते कृते सति यत् किश्चित् प्रस्तावात् सुखरूपं फलं ' प्राप्यं ' प्राप्तुं शक्यम् ' स्वसंवित्कलया ' निजज्ञानरूपविज्ञानेन विदुः–विदन्ति । हे अघद्रुमकरे–पापतरुनिचये, करिशब्दस्येकारान्तस्यापि गजार्थे औणादिकस्य भवति । ' भवकरीणां ' इत्यादिषु प्रयुक्तस्य सद्भावात् । करे !— हस्तिन् अद्य त्वयि दृष्टे सति तत् सुखं मम करेऽस्ति, सुलभं ज्ञानमित्यर्थः । तत् सुखं कीदृशम् ? ' सुखं त्रिदिवशर्मणोः । ' ( हेम्यने० श्लो. २८ ) इत्यनेकार्थवचनात् सुखं–स्वर्गस्तत् अतिक्रान्तं ततोऽप्यतिशायि परमपदं सुखमित्यर्थः । ननु सुखस्य सुखादेवातिशायित्वं प्रयुज्यते, न तु स्वर्गात् प्रस्तरपृथ्वीविमानादिरूपात् । नहि गुणस्य द्रव्यादतिशयो घटते, किन्तु गुणादेव । सत्यम् । अत्र सुखशब्दः स्वर्गो इव तत् सुखेऽपि वर्तते । 'मञ्चाः क्रोशन्ति' इतिवद्, 'तदाश्रयात् तद्व्यपदेशः' इति न्यायात् पुनः कीदृशम् ? ' सुखम् ' सुष्ठु–ज्ञानं सहचारितया यस्मिन् ततः ॥ २ ॥

न ते प्रपीड्याः पुरुषा रुपाऽरुपा न तांश्च दृष्टाः समया मयाऽऽमयाः ।
नमन्ति तां मुद्रसवास ! वासवा येषां मतिस्ते रमते मते मते ॥ ३ ॥

वन्हेर्विनम्रद्युसदा सदा सदायताक्ष ! नागं भवता वताऽवता ।
आर्द्रीकृतान्तर्हृदयो दयोदयो निदर्शितः सद्विधिनाऽऽधिनाधिना ॥४॥

अवचूरिः ।

रुपा—रोषः सैव अरुः-पीडादिहेतुत्वाद् व्रणस्तेन तान् समया-तेषां समीपे इत्यर्थः । मयोपलक्षणत्वादन्यैरप्यामया बाह्यान्तरा न दृष्टाः। गौणात् समया इत्यनेन तानित्यत्र द्वितीया । मुदेव रसस्तस्य वासः 'आधारे घञ्' स्थानमित्यर्थः । अनन्तानन्तमयत्वात् तस्य-सम्बोधनं मुद्रसवास ! वासवानां विशेषणं वा 'मतन्तु सम्मतेऽर्चिते' (हेम्यने. श्लो. २।१८३) इत्यनेकार्थवचनात् । ते-तव मते सम्मते-स्याद्वादरूपे इत्यर्थः । कीदृशे मते ? पूज्यत्वात् अर्चिते इन्द्रादिभिरित्यध्याहार्यम् । मतशब्दो विशेषण-रूपोऽपि केवलः प्रयुक्तो दृश्यते 'यद्राधावेधिनो लक्ष्ये तन्मनो मेऽस्तु ते मते ।' ( ) इत्यादिष्विव ॥ ३ ॥

हे सदायताक्ष ! सती-रुचिरे आयते अक्षिणी-नेत्रे यस्य तस्य सम्बोधनम् । विनम्रद्युसदा सदा । वत इत्याश्चर्ये । वन्हेर्नागं अवता सता आर्द्रीकृतं । अन्तः-हृदयं आर्द्रीकृतं चित्तं येन । बाह्यहृदयस्यार्द्री-करणासम्भवात् । एवंविधो 'दयोदयः' दयाया उदयो निदर्शितः-नितरां वर्णितः, परैरपि दुःखे-पतितो विषधरोऽपि पालनीयः एतन्नागवत् इत्येवं स दृष्टान्तीकृतो वा । केन ? सद्विधिना' सन्-प्रधानो विधिः कमठतापस-हितशिक्षावेप्रदानादिरूपस्तेन । कीदृशेन ? आधि-चित्तसन्तापं प्रस्तावात् कृतिनां नाधिना 'नाधृङ् नाथृङ्वत्' इति धातोरुपशमार्थेऽपि वर्तनात् शमयतीति शीले आधिनाधी, तेन ॥ ४ ॥

यदीयङ्गगीश्चगमागमागमावनीसमा मोहरतीरतीरती ।
उपासते त्वामदरादरा दरापहं न के सन्महितं हितं हि तम् ॥५॥

भीवत् कुविद्यागुरवो रवोरवो वादान्दवः संयमधाम ! धामधा ।
यावद् भवत्तीर्थ्यघनाघना घना नोयन्ति तद्विप्लवदा वदावदाः ॥६॥

अवचूरिः ।

यत्रा गमाः-सदृशपाठाः येषु ईदृशा ये आगमाः-सिद्धान्तास्त एव अगमा-वृक्षास्तेषां उत्पत्तिहेतुत्वात् अवनीसमा-पृथ्वीसमा यदीयगीः त्रिपदीरूपा संवेगजनकतया मोहमिथ्यात्वकषायाद्यष्टाविंशतिभेदमोहनीयकर्माणि रतो-विलसितानि प्रकरणादभव्यानां अतीरति-अतिशयेन क्षिपति 'इरण् क्षेपे' इत्यस्य धातोर्यौजादिकत्वात् णिज्, विकल्पात्र ईडत्यव्ययः प्रयक्षेऽर्थे । 'ई स्यात् खेदप्रकोपोक्त्यावीक्षेधे दुःखभावने । प्रत्यक्षे सन्निधावपि ।' ( हैम्यने० ५। ) इत्यनेकार्थवचनात् । हि इति निश्चये । त्वां दरापहं भयच्छेदिनं-सन्महितं-उत्तमजनपूजितम् । हितं जगतामपि वत्सलत्वात् । अदरादराः-अनापदादराः सन्तः के न उपासते ? अपि तु सर्वेऽपि । काकूक्तिरियम् । दरशब्दस्तु दरेत्यव्ययम् देरपदं वा' ( हैम्यने० २।४१९) इत्यनेकार्थवार्त्तिकवचनेऽपि समाश्रितः प्रयुक्तो दृश्यते-

'दरतलिनदरिद्रापिसराग्यङ्कानि

त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ।' ( ) इत्य-ग्रहरचूडामणौ दर्शनात् ॥५॥

हे संयमधाम ! वादिरूपा इन्दवः तावद् धामधाः-तेजोधारिणः । कीदृशास्ते ? कुविद्यागुरवः-कुविद्यायाः कुत्सितज्ञानस्य मिथ्यात्वस्येत्यर्थः । प्रवर्तकाः । तथा रवेण-वितण्डाकोलाहलेन उरवो-महान्तः । इन्दुरपि कोः-पृथ्व्याः विद्यागुरुः प्रकाशकत्वात् ज्ञानहेतुः । रः-शरणं यत्यति-शोषयतीति

प्रपञ्चितामप्यतिभीतिभीतिभी रुणद्धि भक्त्योल्लसतां सतां सताम् ।
त्वन्मूर्तिरर्तिः सकला कला कलावपीश ! क्लृप्तव्यसनासना सना ॥७॥
त्वयि प्रसन्ने प्रगुणा गुणागुणा द्विषोऽपि च प्राज्यमहा महामहा ।
भवेत् सदोदित्वरधीरधीरधीशता च जन्तुष्वतिभूतिभूतिभूः ॥८॥

अवचूरिः ।

रवः-शम्भुः तेन शिरसा धारिणा उरुः-महान्, सर्वे हि बहुमानदायकेन महान् स्यात् इत्यन्ययमप्युक्तिलेशो ज्ञेयः । भवत्तीर्थ्या एव घनाघना-मेघाः घनाः-सान्द्रा वा दृढा वा न उद्यन्ति, न उद्भवन्ति, तेषां वादोन्द्रूनां विप्लवं ददतीति तद्विप्लवदाः वदावदा-युक्तिभिर्गर्जिताश्च ॥६॥

अतिभीः-वज्रज्वाला ईतयः सप्त अतिवृष्ट्यनावृष्ट्यादयः, भीतयोऽपि इहलोकभयाद्याः सप्त, ताभिः प्रपञ्चितामपि अर्ति त्वन्मूर्तिः-तव प्रतिमा कलावपि हे ईश ! भक्त्योल्लसतां सतां वर्तमानानां सतां-उत्तमानां रुणद्धि हरतीत्यर्थः अपिशब्दाद व्यालादीनां। कीदृशी ? सकला-कलया-शल्येन प्रस्तावात् सूत्रधारसत्केन वर्तते या सा । तथा कला मनोहरा । कलशब्द सामान्येनापि मनोहरार्थे दृश्यते । यथा माघे 'मुदरमान्तकलभावि कलस्वरैः ( ) इत्यादौ । तथा क्लृप्तव्यसनानां दुःखानां द्यूतादीनां वा असनं-विध्वंसो यया । सना-सदा ॥

गुणाः ज्ञानादयः प्रगुणाः-सज्जीभवन्ति इत्यध्याहार्यम् । द्विषः-वैरिणः गुणाः-गौणाः स्युः 'गुणो ज्या सूत्रतन्तुषु । रज्जौ सत्वादौ सन्ध्याय शौर्यादौ भीम इन्द्रिये । रूपादावभिप्रधाने च दोषान्यस्मिन् विशेषणे ॥ (हैम्यने० श्लो० २।१३७। इत्यनेकार्थवचनात् गुणाः गौणाः स्युः

इत्थं स्तोत्रपथं कथञ्चन घनश्यामाङ्ग ! वामाङ्गज !
त्वां नीत्वा तनुधीरपि त्रिभुवनत्राणैकदीक्षागुरो ! ।
नेन्द्रत्वादिवरं जिनेश ! न वरं नाथामि नाथामिता-
नन्दश्रीगुरुसोमसुन्दरपरब्रह्मप्रकाशोदयम् ॥९॥



तथा त्वयि प्रसन्ने जन्तुषु अधीशता-प्रभुता भवेत्। कीदृशी ? प्राज्यं-महः-तेजो यशाः सा । तथा महान्तो महा उत्सवा यस्यां सा। तथा वद्विपरा धीरा याग्रान्तरवैरिभिरक्षोभ्या धीर्यस्याः सा। तथा अतिशयेन भूतेः-उत्पत्तिः तस्या भूः-भूमिः स्थानमित्यर्थः ॥ इत्यं स्पष्टम् ॥

[ ५७ ]

श्रीशिवसुन्दरसूरिविरचितं
गतप्रत्यागतयमकाङ्कितं

# श्रीपार्श्वनाथलघुस्तवनम् ।

---

शान्तानम्रोकरक्षा रतिपरवचन क्ष्मालसन्नाम धीरो
तापासिन्याधिपः स्वो नवनयमतगः क्षीरकल्पो शयोभूः ।
रायादच्छो गजन्यासमलमदमुगक्षोभिचित्ताङ्गरन्ता
क्षापः सुतावविज्ञो विभवनततमस्तोयदस्वो विरोधी ॥१॥

धीरो विश्वोदय स्तोमततनवभविज्ञो विवप्तासुपक्ष्मा
तारङ्गत्तां चिभिक्षो गमुदमलमसन्याजगच्छोदयारा ।
भूयोऽशल्पोकरक्षी गतमयनवनस्वोपधिन्यासिपाता
रोधी मन्नासलक्ष्मा न च वरपतिरक्षारकम्रोनताशाम् ॥२॥

[ वृत्तगतप्रत्यागतम् ]

जाते रुद्रो मनस्वी शययमलवरः स्वीयभक्तावकोऽसौ
नेत्रा प्रक्षारवर्जी भुवि समहि मसद्धामनन्यो भगी भोः ।
भोगी भव्यो नमद्धा समहि मसविभुर्जीवरक्षाप्रताने
ऽसौ को वक्ता मयस्वी रवलमय यशस्वी नमद्रोरुतेजाः ॥३॥

[ अर्धगतप्रत्यागतम् ]

भीशोकच्छेदनस्थो दुररिहृतिरसः श्रीमयः सोधमोरो
रोमोधः सोऽयमः श्रीसरतिहरिरदुस्थो नदच्छेकशोभी ।
जीयादुत्पादकर्त्ता हहममस–नष्टो ममत्तो विरोधा
धारो वित्तामनष्टो नसममहहृता कदत्पादुयाजी ॥ ४ ॥

[ पादगतप्रत्यागतम् ]

एवं गतागतैः काव्यैः संस्तुतः श्रीजिनेश्वरः ।
क्षेमङ्करः श्रिये भूयादपूर्वः शिवसुन्दरः ॥५॥

---

[ ५८ ]

श्रीरविसागरविरचितं
यमकाङ्कितं

## श्रीपार्श्वनाथस्तवनम् ।

---

श्रीअश्वसेनरतनयो नयो नयोत्पत्तिर्विनूतो विधुनाऽधुना धुनाः ।
दुःखान्यवद्यै रहितो हितोऽहितोज्झितः प्रभो ! श्याममहा महा-महाः॥
कैवल्यचञ्चत्कमला मला मलानालिङ्गित ! ध्वस्तबलावलावलाम् ।
जगत्प्रभो ! भाजि महोमहो महोदयः पुनानो जगतां गतागताम् ॥२॥
भेजे भवन्तं सकलाः कलाः कलाः स्वामिन् ! मुनीनामचलाचलाचला ।
मृगाङ्कवन्नात्र कलं कलं कलं मर्त्यस्य मोक्षे सदनं दनं दनम् ॥३॥
स्थाने गते वज्रवल्लिके लिके लिके स्थाणुः सरोजे त्वयि मायि मायिमा ।
दूरेऽस्ति किं त्वदगरिमारिमारिमातन्वत्यमुं तरसा रसा रसा ॥४॥

सम्मोहितोर्वीवलया लया लया मर्त्यप्रभास्त्वत्प्रमदा मदामदा ।
ध्यानं न जह्रे भवतोऽवतो वतोदारा मरीचीः किरणे रणे रणे ॥५॥
विभो ! भवन्तं जनता नता नता मसावलीवैपदरा दरा दराः !
चिक्षेप किं भक्तिमती मती मती सम्बिभ्रती सद्विरती रतीः रती ॥ ६ ॥
भवत्प्रभावाञ्छमघामघामघा पुनर्भवे सद्गरं गरं गरम् ।
बिभ्रद् गुणौघं कमितामितामिता क्षयं न किं मुक्तिजिनाजिनाजिनाः॥७
सर्वे नराः शर्मधरा धरा धरा इवात्तभीजन्त्वसुरासुराः सुराः ।
स्पष्टीकृता पुण्यमया मया मया युक्तं त्वया कामनया नया नयाः॥८॥

श्रीराजसागरमनीषिसुशिष्यशिष्यः
श्रीमत्सुधीसहजसागरसुप्रभावात् ।
भक्ताशयः शिवमुदे रविसागराह–
स्तुष्टाव पार्श्वमधिपं यमकाष्टकेण ॥ ९ ॥

---

[ ८९ ]

## श्रीविद्याविमलशिष्याणुप्रणीतं

# श्रीपार्श्वजिनस्तवनम् ।

---

पण्डितोत्तम पं. श्री ६ वानरगणिगुरुभ्यो नमः ।

निजगुरोरभिनम्य पदाम्बुजं स्तुतिपथं जिनपार्श्वमहं नये ।
भविकलोकचकोरनिशाकरं भजत पार्श्वजिनं जनशङ्करम् ॥ १ ॥
विततसाधुगुणास्पदसातदं सुकृतकाननपल्लवनाम्बुदम् ।
निजगभीरगुणैर्जितसागरं भजत पार्श्वजिनं जनशङ्करम् ॥ २ ॥

निजसुरूपविनिर्जितमन्मथं विनतमानवदर्शितसत्पथम् ।
सकलसिद्धिकरं करुणापरं भजत पार्श्वजिनं जनशङ्करम् ॥ ३ ॥

कठिनकल्कवितानविवारकं विकटसङ्कटकोटिविनाशकम् ।
निखिलविघ्नहरं श्रमणेश्वरं भजत पार्श्वजिनं जनशङ्करम् ॥ ४ ॥

सकलसेवकनिर्मलबुद्धिदं कुमुदबान्धवकान्तगुणास्पदम् ।
धरणनाकिनतं परमेश्वरं भजत पार्श्वजिनं जनशङ्करम् ॥ ५ ॥

दुरितमानकदामहखण्डनं कुमतिमोहमहारिपुभञ्जनम् ।
विगतदोषभरं सुखसागरं भजत पार्श्वजिनं जनशङ्करम् ॥ ६ ॥

विजितदुर्जयदर्पकदर्पकं प्रवरनिर्वृतिसत्पथदायकम् ।
रुचिरभक्तिविनम्रसुरासुरं भजत पार्श्वजिनं जनशङ्करम् ॥ ७ ॥

नलिनपुष्पविकस्वरलोचनं सकलमङ्गलवल्लिघनाघनम् ।
प्रवरलक्षणलक्षितसंवरं भजत पार्श्वजिनं जनशङ्करम् ॥ ८ ॥

प्रवरमङ्गलमण्डलसन्मुखं विमलकीर्तिविकाशितदिङ्मुखम् ।
विमलकेवलचारुदिवाकरं भजत पार्श्वजिनं जनशङ्करम् ॥ ९ ॥

इत्थं पार्श्वजिनेश्वरः स्तुतिपथं नीतो मया भक्तितः
श्रेयःसद्म सदश्वसेननृपतेर्वंशैकचूडामणिः ।
श्रीविद्याविमलाभिधेयसुकवेः शिष्याणुना श्रेयसे
सर्वारिष्टविनाशकस्तनुमतां देयात् सदा मङ्गलम् ॥१०॥

[ ६० ]

## कल्याणमन्दिरचरमचरणपूर्त्तिरूपं
# श्रीपार्श्वजिनस्तवनम् ।

कल्याणकेलिनिलयं विलयं वितन्वद्
विघ्नावलेर्भवति को न कृती कृतार्थः ।
श्री 'पार्श्वदेव' भवतोऽङ्घ्रियुगं भवाब्धौ
पोतायमानमभिनम्य जिनेश्वरस्य ॥ १ ॥
प्राज्ञत्प्रभावपटहः पटुहर्षहेतु-
र्दन्ध्वन्यते त्रिजगदङ्गणरङ्गजीवः ।
अद्यापि यस्य भुवनाद्भुतवैभवस्य
तस्याहमेष किल संस्तवनं करिष्ये ॥ २ ॥
नीचाः परेऽल्पमतयोऽनुभविष्णवोऽपि
साक्षाद् भवद्गुणगणान् कथमुद्गृणन्तु ? ।
आजन्मवाग्विभववन्ध्यमुखः कदापि
रूपं प्ररूपयति किं किल धर्मरश्मेः ॥ ३ ॥
त्वामन्तरेण विमलोज्ज्वलकेवलार्कं
कः प्रत्यलो हरिहरप्रभृतिः प्रमातुम् ।
धर्मान् पदार्थनिवहस्य समानहो यत्
मीयेत केन जलधेर्ननु रत्नराशिः ? ॥ ४ ॥
वामेय ! गेयगरिमाढ्य ! भवत्प्रणीत-
विश्वप्रतीतवरवाङ्मयपारदृश्वा ।

यूकायवैरथ रथत्रसरेणुभिश्च
विस्तीर्णतां कथयति स्वधियाम्बुराशेः ॥ ५ ॥
ते कर्मभारगुरवः परवावदूका
ये तावकीनवचनान्यपि संशयानाः ।
प्रामाण्यतस्तदुपयन्ति यदाचरन्ति
जल्पन्ति वा निजगिरा ननु पक्षिणोऽपि ॥ ६ ॥
कल्याणकक्षणनिरीक्षणमस्तु ते तत्
तत्किंवदन्त्यपि सतां मुदमादधाति ।
यत्पद्मिनीप्रणयिनं भ्रमरं भ्रमन्तं
प्रीणाति पद्मसरसः सरसोऽनिलोऽपि ॥ ७ ॥
सन्नह्य सह्यगुरु(गिरि)कुञ्जरवाजिराजि-
प्रेङ्खत्पदाजिरसभाजि भवत्युपेते ।
म्लेच्छैरभाजि भुजगैरिव तैरुपान्त-
मभ्यागते वनशिखण्डिनि चन्दनस्य ॥ ८ ॥
स्वामिंस्तव क्षम ! ममापि मनागुपेक्षा-
मर्हन्ति नो गुणगणाः स्वकसेवकस्य ।
कामं कषायविषयैः परिमुष्यमाणा-
श्चौरैरिवाशु पशवः प्रपलायमानैः ॥ ९ ॥
मामीदृशं जडमतिं दृढभक्तिरेव
स्वामिंस्तव स्तवविधौ त्वरयत्यवश्यम् ।
यच्चोयमुच्छलति तोयनिधेरगाध-
मन्तर्गतस्य मरुतः स किलानुभावः ॥ १० ॥

लोकत्रयस्मयमयामयनाशवैद्य !
सद्यस्त्वयैव निहतः स हि मोहराजः ।
आप्लाव्यतेऽपि जगदम्ब्युदकेन येन
पीतं न किं तदपि दुर्धरवाडवेन ? ॥ ११ ॥
नीचैर्विनम्य चतुरान् चरणारविन्दं
ये वन्दते विदधते तव कर्म नेतः ! ।
ते दूरतः कथमघोगमनं त्यजन्ति
चिन्त्यो न हन्त महतां यदि वा प्रभावः ॥१२॥
युक्तं चिरेण परिलालितपालितानि
कर्माणि देव ! कपसीह समूलजालम् ।
नेतापि कृन्तति नितान्तमपायबुद्ध्या
नीलद्रुमाणि विपिनानि न किं हि मानी ? ॥ १३ ॥
देव ! त्वदङ्घ्रिकुसुमार्चनसंशयालोः
सिद्धान्तवारिधिविगाहनलीनबुद्धेः ।
सन्देहदावदहनोपशमे घनाभं
दक्षस्य सम्भवि पदं ननु कर्णिकायाः ॥ १४ ॥
पीत्वा गिरस्तव निरस्तरसान्तरास्ते
भव्याङ्गिनो दधति शान्तरसात्मकत्वम् ।
लोहाह्वयाः परिणता रसनायकेन
चामीकरत्वमचिरादिव धातुभेदाः ॥ १५ ॥
दुष्टे दशस्वपि भवेषु विसष्टरोषे
तत्कालमेव कमठेऽतिशठेऽप्यवैरः ।

स्वैरं व्यधाथ हृदयं सदयं नयोऽयं
      यद् विग्रहं प्रशमयन्ति महानुभावाः ॥ १६ ॥
लोकत्रयीतनुगतं परमाणुदेशे
      शुक्लस्मृतिप्रबलमन्त्रबलान्निरुध्य ।
[ दुष्कर्म ? ] मर्मगरभेदकरं त्वदन्यः
      किं नाम नो विषविकारमपाकरोति ? ॥ १७ ॥
त्वामेव केवलचिदास्पदमन्यतीर्थ्या-
      स्ते स्वस्वतीर्थपतयो हृदयेषु दध्युः ।
आधेयवस्तुमिलितः स्फटिकोऽमलः किं
      नो गृह्णते विविधवर्णविपर्ययेण ? ॥ १८ ॥
वप्रत्रयोदयगिरीन्द्रशिरोऽधिरोह-
      त्युद्भासयत्यमुमतां सुतमां तमांसि ।
मित्रे त्वयि भजति लोचनगोचरत्वं
      किं वा विबोधमुपयाति न जीवलोकः ? ॥१९॥
नाराधयन्ति विधिना जिनशासनं ये
      नाभ्यर्चयन्ति च रुचैः क्रमयामलं ते ।
ते दैन्यदुःस्थितधियः सततं स्मरन्तो
      गच्छन्ति नूनमग एव हि बन्धनानि ॥ २० ॥
यस्मै सविस्मयमुपासि निरं विरञ्चि-
      रस्मायत स्मयमपास्य च चक्रपाणिः ।
संवीनराग ! भवदागमवेदिनस्तद्
      भव्या भजन्ति तरसाप्यवरामरत्वम् ॥ २१ ॥

त्वज्जन्मनोच्छ्रितवती चतुरङ्गुलानि
भूमिर्निवेदयति देव ! सतामितीव ।
येऽस्मै सहर्षहृदयाः स्पृहयन्ति मर्त्या-
स्ते नूनमूर्ध्वगतयः खलु शुद्धभावाः ॥ २२ ॥

जन्माभिषेकसमयेऽशनिशोभयाढ्यं
धाराभिवर्षणसहं हरिवाहनं त्वाम् ।
के के विवेकिनिकरा नवृतुर्न दृष्ट्वा
चामीकराद्रिशिरसीव नवाम्बुवाहम् ॥ २३ ॥

प्रादुर्भवंस्तव समं सितदन्तकान्ति-
पूरोऽधरस्य विदधाति समग्ररागम् ।
वाचं पुनस्तव मुनीश ! निशम्य सम्यग्
नीरागतां व्रजति को न सचेतनोऽपि ? ॥ २४ ॥

गोदण्डकोण्वव बुधाः परदर्शनेषु
मा गुः परं शिवपुरं प्रति वः स्पृहा चेत् ।
एतं समाश्रयत सत्पथमित्थमाह
मन्ये नदन्नभिनभः सुरदुन्दुभिस्ते ॥ २५ ॥

स्मृत्वा हितान्यवहितं स हि नागराजः
सद्भक्तिसम्भ्रमविनिर्मितचित्रवर्णः ।
श्रीपार्श्वदेव ! कपिशीर्षफणत्रिवप्र-
व्याजात् त्रि

श्रामण्यकेवलरमासुकृतोपदेशान्
धातक्यशोकफलदेषु यकेष्वलब्धाः ।
ध्यानावधाननिरतेषु नरेषु तेन
सालत्रयेण भगवन्नभितो विभासि ॥ २७ ॥

स त्वं चिरं जय जिनेश्वर ! यस्य वाच-
श्चित्ते विचिन्त्य चतुराः कुसुमास्त्रमेव ।
सम्बोधयन्ति दुरितस्य विदुर्विमुक्ताः
त्वत्सङ्गमे सुमनसो न रमन्त एव ॥ २८ ॥

सञ्चिन्तितार्थरचनावचनातिगाभः
सर्वैः सुपर्वनिवहैः परिषेव्यमाणः ।
त्वं पार्थिवप्रभवकामधरः प्रभासि
चित्रं विभो ! यदसि कर्मविपाकशून्यः ॥ २९ ॥

व्याघातवर्जितमनन्तमनन्तरायं
नानाविधावरणवर्गनिसर्गमुक्तम् ।
सद्दर्शनेन सहचारि पुनः प्रपूर्णं
ज्ञानं त्वयि स्फुरति विश्वविकासहेतुः ॥ ३० ॥

व्यर्थीकृते क्षणमहांसि महातमांसि
सद्यानि दुष्टमनसा कमठेन यानि ।
न स्पृष्टमैस्त्यविभवानुदितोऽनुवेलं
ग्रस्तस्त्वमीभिरयमेव परं दुरात्मा ॥ ३१ ॥

स्वामिन्ननार्यविषयेषु सृजन् विहार-
माशातितस्त्वमसि जाड्यमयेन येन ।
संसारवारिनिलयेऽजनि दुःखरूपं
तेनैव तस्य जिन ! दुस्तरवारिकृत्यम् ॥ ३२ ॥

वैविमुक्तवति देव ! तदैव वैरं
यत्त्वय्यपि प्रतिपदं दृढमूढबुद्धिः ।
चक्रेऽतिवक्रहृदयः कमठः प्रहारं
सोऽस्याभवत्प्रतिभवं भवदुःखहेतुः ॥ ३३ ॥

तत्त्वोदकं त्वमुदितं प्रकटीचिकीर्षुः
सत्त्वोपकारकरणाय भवोदपाने ।
प्रादुर्बभूव धुरि यत्पुरुषोत्तमस्य
पादद्वयं तव विभो ! भुवि जन्मभाजः ॥ ३४ ॥

त्वत्साग्रयोजनशते वसते जनाय
मारीतिभीप्रभृतयः प्रभवः कथं स्युः ? ।
यज्जाग्रतः खगपतेरपि पश्य तस्य
किं वा विपद्विषधरी सविधं समेति ? ॥ ३५ ॥

आशातना विदधिरे विविधा बृहत्यो
हत्या इव त्वयि मया विधिदुर्विधेन ।
तन्नारकादिकभवोद्भववेदनानां
जातो निकेतनमहं मथिताशयानाम् ॥ ३६ ॥

अभ्यस्तकेवलमनुद्धतपःप्रभाव-
प्राग्भारसारविभवास्तव देव ! मन्ये ।
सर्वत्र भक्तजनविघ्नभिदे व्रजेयुः
प्रोद्यत्प्रबन्धगतयः कथमन्यथैते ॥ ३७ ॥

वाहीकबुद्धिशबलेन न भावपूजा
द्रव्यार्हणाऽप्यनुपयुक्ततया च चक्रे ।
उच्चावचासु जिन ! योनिषु तद् भ्रमामि
यस्मात् क्रियाः प्रतिफलन्ति न भावशून्याः ॥ ३८ ॥

नेतः ! कृपालुकुलकुञ्जर ! भीमसत्त्व-
भीवज्रपञ्जर ! जरामरणप्रहीण ! ।
स्वान्तालवालपरिणाममयः प्ररूढ-
दुःखाङ्कुरोद्दलनतत्परतां विधेहि ॥ ३९ ॥

मानुष्यकार्यविषयान्वयजातिरूपा-
रोग्यायुरार्हतमतादिकमप्यवाप्य ।
त्वच्छासने निबिडभक्तिमना दधानो
वध्योऽस्मि चेद् भुवनपावन ! हा हतोऽस्मि ॥४०॥

'निष्कारणातिकरुणापरिणामधाम
व्यायामपाणिगणवर्ण्यगुणाभिराम ! ।
पाहि प्रसीद भगवन् ! सुकृतेषु मां कु-
सीदन्तमद्य भयदव्यसनाम्बुराशेः ॥ ४१ ॥

मात्राधिकत्वात् कमले[1] न तुष्यसि प्रियप्रदः सत्कमलो[2]पलक्षितः ।
जिनेन्द्र ! मुक्ताङ्कमलक्ष्य[3]दर्शनं पदं न नम्रं कमलम्भयः[4] शुभम् ॥

वाह्यं तथान्तरमसौ कमलं[5] भिनत्ति
मात्राधिकं कमलवं[6] न दधाति माने ।
एनोगतांशकमलम्व[7] ( लं च ? ) परप्रभावं
भूमृद्धराकमलसेतर[8]सेव्यतुल्यम् ॥ ७ ॥

पश्यन्तमेकमलका[9]धिपतीभ्यपूज्यं
सेवे शिवार्पकमलक्त[10]करक्तपादम् ।
क्षोणीविशेपकमलं[11] कपदा[12]ब्जसक्त-
सच्चञ्चरीकमलको[13]च्चयवृद्ध्यपेतम् ॥ ८ ॥

व्याख्याक्षणे कमलभू[14]श्चतुराननत्वात्
ख्यातस्तथा कमलबन्धु[15]रिव प्रतापी ।
पद्मापतिः कमलनाभि[16]रिव प्रभो ! त्वं
ध्यानं करोषि कमलासन[17]माश्रितः सन् ॥ ९ ॥

---

टिप्पनम् ।

१ कामे । २ क्लोम० । ३ मुक्ताङ्कम्--कलङ्करहितम् । ४ कं भव्यप्राणिनं न अलम्भयः--प्रापयः ? अपि तु सर्वमपि । ५ रोगम् । ६ कामं--इच्छाम् । ७ अरं--अत्यर्थम् , । ८ अलसेतरः--आलस्यरहितः । ९ रलयोरैक्याद् अरङ्कवैश्रमण० । १० मोक्षदायकम् । ११ पृथ्वीतिलकम् । १२ सूर्य० । १३ कुन्तलवृद्धिरहितम्० । १४ ब्रह्मा । १५ सूर्यः । १६ विष्णुः । १७ पद्मासनम् ।

संक्षिप्तशोक ! [1]मलयाद्रिजशीतवाक्यं
विस्तार्य[2]शोकमलपन्तमवद्यवाचम् ।
मात्रोल्लसत्कमल[3]संसृतिकल्पवृक्षं
सत्पुण्यतोऽक[4]मलवद्भिरनाप्यमीडे ॥ १० ॥

मानाह्यशोक[5] ! [6]मलमुक्त ! परित्यजन्तं
संस्तौम्यभीकमल[7]युक्वनिताङ्गरङ्गम् ।
क्षिप्तार्य[8]नीकमलघुप्रशमोपसेव्यं
त्वां मात्रिकाधिक[9]मलं श्रयतां दविष्ठम् ॥ ११ ॥

[10]सम्भूपितान्तकमल[11]र्कसमं घनाप्तौ
त्यक्त्वातुलांशुक[12]मलज्जमपीश ! रम्यम् ।
सत्सेवितान्तिक ! [13]मलव्रजदत्तदुःखं
श्रेयोलतासु [14]कमलं किल मात्रयाढ्यम् ॥ १२ ॥

टिप्पनम् ।

१ चन्दन० । २ विस्तारवान् अशोकवृक्षो यस्य । ३ मरुदेश० । ४ पापमलयुक्तैः । ५ मानसर्पदर्पदलने वञ्जुलवृक्ष ! । ६ कलङ्कमुक्त ! । ७ निर्भयं विष्ठायुक्तं च ललनायाः अंगरङ्गं परित्यजन्तम् । ८ विध्वस्त-शत्रुसैन्यम् । ९ मात्रयाधिकमलशब्द मालं-कपटम् । १० भूषितान्वयम् । ११ श्वेतार्कसमम् । १२ कदर्यम् । १३ पापौघ० । १४ मात्रयाधिकं कमलमिति कामलं-वसन्तम् ।

ददानः सद्बोधं क[1]मलजनतानामपि विभो !
द्वितीयत्वे पूर्णः क[2]मलश इव प्रीतिकरणः ।
परिस्फूर्जत्कीर्तिः स्फुरति क[3]मलाभृद्द्युतिसिता
क्रियाणां पुण्यानां तव कक[4]मलापं प्रवदतः ॥ १९ ॥
प्रतीक्ष्यः स्वर्गाधीश्वरक[5]मलनाथादिमसुरैः–
र्महातेजस्त्वेन त्वमसि क[6]मलः कर्मदहनः ।
सतां विघ्नव्यापव्यपगमविधौ मू[7]षकमल–
स्तव श्लोकः पूर्णं क[8]मलभवमप्याशु जितवान् ॥ २० ॥
तमोदैत्यध्वंसे क[9]मलशयवद् भाति भुवने
नमत्पुंसामीशो भवि[10]कमललीनिर्मितिचणः ।
परिक्षिप्तन्यक्षाहि[11]तक[12]मललः पावनगति–
र्जगत्प्रौढावासांगणकम[13]लली भूतसुयशाः ॥ २१ ॥
चिरं जीयात् सार्वः क[14]मलरुहपाणिक्रमयुगः
स्वयं भावात् से[15]वाणुकमललगीर्वाणनिकरः ।

टिप्पनम् ।

१ कमरो–मूर्खः । २ द्वितीयमक्षरं मकारस्तल्लोपे कलश इव । ३ मलोपे कलाभृत्–चन्द्रः । ४ कलापम् । ५ श्रीपतिः । ६ सूर्यः । ७ गणेशः । ८ जलभवः–चन्द्रः । ९ जलशयः–कृष्णः । १० भविनां कं–क्षेम तन्मण्डली –श्रेणिः तत्र कृतोद्यमः । ११ हिअतकः–वैरी । १२ मण्डलः–श्वानः । १३ मण्डलीभूतः–परिधीभूतः । १४ जलरुहं–कमलम् । १५ सेवार्थं समागतः मण्डलं–द्वादशराजकम् ।

सदा सम्यग् निर्नाशितनिजयशःस्तावकमलः[1]

चलन्मायुर्दुष्टज्वरकमलछा[2]यामयहरः ॥ २२ ॥

यदाहं त्वत्सेवां च कमलभि[3]कर्मीकृतमुख-

स्तदा स्यां सत्पुण्यात् कमलसि[4] वधव्याजनकृते ।

चरित्रस्वीकारे कमलपमलो[5]ऽसीन्द्रियदमे

चरित्रस्वीकारे कमलसि[6] यथा नैव भवसि ॥ २३ ॥

शरप्रासप्राग्वत्कमलमुखशस्त्रा[7]ङ्कितकरे

गृहस्थत्वे स्वामी कमलकरणो[8] नैव चरणे ।

मदक्रोधव्यापत्कमलभरनिर्नाशनचणः[9]

प्रणम्यःश्रेयःश्रीयुवतिकमलस्त्वं[10] तनुमताम् ॥ २४ ॥

यथा वर्णज्येष्ठः[11] कमलनल[12]मर्चत्य[13]नुदिनं

सुरज्येष्ठं[14] स्पष्टं कमलनिशमाशंसति[15] यथा ।

टिप्पनम् ।

१ मण्ढः-शोकः । २ मण्डटं-कुष्टः । ३ अभिलपितवान्, आत्मनेपदमनित्यमिति । ४ कमई आचष्टे । ५ कमठः-कच्छपः स इवाचरसि कमठसि । ६ कमठं-मुनिभाजनं महसि इति कमठसि । ७ कमरं-धनुः । ८ कमरं-कोमलशरीरम् यस्य । ९ कमरः-चोरः । १० कमलः-कान्तः । ११ ब्राह्मणः । १२ कं-अग्नि महत इति कमट्-अग्निहोत्री । १३ अग्निम् । १४ ब्रह्माणम् । १५ कं-ब्रह्माणं महति-ब्रह्मार्चकः ।

यथा चाहर्नाथं[1] कमलति[2] नयादर्कयति वा

त्वदेकत्राणस्त्वामणुकमलहं[3] स्तौमि च तथा ॥ २५ ॥

युवापि त्वं स्वामी सुकमलधिकारनिपुण-[4]

स्ततः ख्यातो गौरीकमल[5] इव दुष्टान्धकहरः ।

नवव्याख्याकाले कमलधरविस्तारिनिनदः[6]

स्वयं पूज्यः स्वामी ननु कमलया[7] भक्तिवशतः ॥ २६ ॥

निर्णिक्तीकृतसत्सहस्रकमलः[8] स्वाङ्घ्रिद्वयस्पर्शनैः

पूज्यस्त्वं कमलप्रभादिभिरभूत्[9] त्वद्वाक्‌रहस्यं विभो !

जानानः कमलप्रभोऽप्यपलपत्[10] संसारचक्रभ्रमी

श्रीपालं कमलप्रभेव[11] सुषुवे त्वामीश ! वामोत्तमम् ॥ २७

प्रस्फूर्जत्कमलप्रभावजलधि[12]ख्यातप्रतापोदयः

श्रीसार्वः कमलस्वरामृतवरद्वीपा[13]नुगच्छद्यशाः ।

---

टिप्पनम् ।

१ सूर्यम् । २ कं-सूर्यं महति-सूर्यार्चकः । ३ अणुकं-स्वल्पं मठति-मावतीति अणुकमठ-स्वल्पमदोऽहम् । ४ रलयोरैक्ये कमरं-धनुः, पुष्प-धनुः-कन्दर्पः । ५ गौरीकान्तः-ईश्वरः । ६ कमलधरो-जलधरः । ७ कालव्यन्तरेन्द्रस्याग्रमहिषी कमलानाम । ८ शत्रुञ्जयः । ९ कमलप्रभा नाम व्यन्तरपत्नी । १० गुरुः कश्चित् । ११ यथा कमलप्रभा माता श्रीपालं सुषुवे तथा वामादेवी त्वाम् । १२ असंख्येसमुद्रद्वीपमध्ये कमलाभिधः समुद्रः । १३ कमलाभिधो द्वीपः ।

ध्वस्तानीक[1]मल[2]प्रभः प्रथयतात् सन्तापनिर्वापणो

सौख्यं जन्मनि निःकलङ्कमलके[3] पूर्णेऽपि शान्तिप्रदः ॥२८॥

अर्द्धेणाङ्कविभास्यलीक[4] ! मलयस्यूर्वीतलं[5] पङ्कजैः

सञ्जातः किल निःकलङ्क[6]मलाधीशान्वये[7] त्वं जिनः ।

त्वद्वाचं कमलजा[8] निजगिरा शृण्वन्ति हर्षोन्नताः

पार्श्वेपु कृतान्ततर्कमल[9]प्रादुष्कृतिप्रत्यलः ॥ २९ ॥

संसारश्रान्तलोके कमलभवति[10] यः पापतापापनोदा-

दग्रे संवाद्यमानानक ! मल्लवदु[11]द्दामतेजाः सुरौघैः ।

नम्रीभूतक्ष्मातृड्गणकमलभृ[12]न्निर्मलश्लोकराशे-

र्निर्ह्रादाधःकृतश्रीपिकमलभृ[13]दायाः स मे सेवकास्ते ॥ ३० ॥

टिप्पनम् ।

१ अनीकं-रणः । २ मण्डा-आमलकी तस्याः फलं मण्डं. शीतगुणत्वात् । ३ मण्डले-देशे । ४ अर्द्धचन्द्रवद् शोभितं अलीकं-मौलं यस्य । ५ मण्डयसि । ६ निरपवादः । ७ मण्डलाधीशो-राजा । ८ मृगसमूहाः । ९ मण्डलः-समूहः । १० कमण्डलु;-प्लक्षवृक्षविशेषः स इव आचरति कमण्डलवति । ११ मण्डलं विद्यते यस्य स मण्डलवान्-सूर्यः १२ निपुणं मण्डलं-सर्पं विभर्तीति मण्डलभृत्-ईश्वरः । १३ मण्डलं-श्वानं बिभर्ति वाहनतया स मण्डलभृत् क्षेत्रपालः ।

क्षोणीपावित्र्यहेतोः कमलल[1]वदिदं पादपद्मद्वयं ते

नैवाज्ञानप्रवृत्तैः कमलल[2]धरणैः श्रीयते सौख्यदायि ।

भक्तप्रत्यूहनाशाम्बिक[3] ! मलन[4]मिव ब्रह्मलक्ष्म्यास्तमौघे

सर्वालोकप्रवृत्ताम्बिक[5] ! मलनजना[6]सेव्यपार्श्वोऽसि पार्श्वः ॥३१॥

क्षोणीविख्यातकीर्त्यानक[7] ! मलय[8]मुखानेकदेशस्थलोकान्

स्वव्याहारेण लक्ष्मीजलधिरनुदिनं बोधयन् बोधिसाधुः ।

इत्थं स्पष्टार्थमाद्यन्मधुकमलभरैः[9] पूज्यपादारविन्दः

श्रीपार्श्वो हेमशुद्धाभरणधरतनुः श्रेयसे संश्रितानाम् ॥ ३२ ॥

---

टिप्पनम् ।

१ कमण्डलुः–कुण्डिका तद्वत् आचरत् कमण्डलुवत् । २ कमण्डलु-धरणैः–तापसैः । ३ अम्बिका–पार्श्वजिनोपासिका । ४ मण्डनं–भूषणम् । ५ अम्बिका–माता । ६ मण्डनाः–अलङ्करिष्णवो जना–इभ्यादयः । ७ पटहः । ८ देशविशेषः । ९ पद्मस्तोमैः ।

[ ६२ ]

## श्रीसागरचन्द्रसूरिविरचितः

# श्रीमन्त्राधिराजकल्पः ।

श्री पार्श्वनाथाय नमः ।

कल्याणाङ्कुरवारिदः शमसुधावार्धौ सुधादीधितिः
कारुण्याम्बुजतिग्मरोचिरखिलक्ष्मापीठकल्पद्रुमः ।
मोहध्वान्ततति प्रदीपकलिका संसारनिस्तारकृत्
भव्यानां शिवतातिरस्तु भगवान् वामासुतोऽयं जिनः॥१॥

भ्रूभङ्गमङ्ग न दधे नयने न ताम्रे
दध्रे न शस्त्रमपि नो परुषं बभाषे ।
कामं जिगाय गतकायममाय एव–
मेव प्रणम्रकमठः स शिवाय देवः ॥ २ ॥

श्वभ्रप्रदाऽशुचिरियं प्रथितेति दोषाद्
योषां हि संयमवधूवशगो हि हित्वा ।
बभ्राम मुक्तिललनागमने सरागो
नीरागतायुगपि यच्छतु शं स पार्श्वः ॥ ३ ॥

अन्तःस्फुरद्रुचिरसञ्चितसत्तत्त्व–
कोटीपतिर्जिनपतिः प्रकटध्वजोऽस्तु ।
वामासुतः फणिपात् फणिपस्य विश्व–
विश्वार्तिसंहतिहरो व्यवहारिवद् यः ॥ ४ ॥

अज्ञोऽपि विज्ञजनविस्मयकारि काव्यं
यस्याः प्रसादलवमाप्य जनस्तनोति ।
मोहान्धकारनिकरार्ककरप्रभावा
सा भारती भवतु जाड्यतमश्छिदे वः ॥ ५ ॥

शून्यात्मकोऽहमपरं स्वकसङ्गतोऽपि
कुर्वन्नगण्यमिह पूर्वपदाधिकां तु ।
सङ्ख्यां यदेकपुरतः स्थितिमाप्य लेभे
वन्देऽतिगीष्पतिगुरून् सुगुरून् मुदा तान् ॥६॥

दुष्कर्मकण्टककटुद्रुममूलभेद-
नेमिप्रभं सुललितप्रभयाभिरामम् ।
सद्भावदेवविनतं गतकोपमानं
सानन्दमूर्जितमतिं सुगुरून् नमामि ॥ ७ ॥

वाचालयत्यनुकलं सकलं जिनेन्द्र-
भक्तिस्ततोऽहममतिः स्तवने प्रवृत्तः ।
सद्भिः प्रशान्तमतिमद्भिरतो विमृश्य
सेर्ष्यं मनो नहि विधेयमिहाऽञ्जलिस्तत् ॥ ८ ॥

काव्ये मुधाकृतसुधालहरीसमूहे
दोषेक्षिणः खलु खलाः सततं भवन्ति ।
स्वादून् मृदूनपि तरून् करभा विहाया-
ऽपीच्छन्ति हा ! कटुककण्टकिनः करीरान् ॥ ९ ॥

काव्याध्वनि प्रवसतामिह सत्कवीनां
वामस्वरः खर इवार्थकरोऽनुकूलः ।
कर्णेजपः प्रकृतितः कलुषाशयोऽपि
चित्रं तु दक्षिणरवः प्रतिकूलताहृत् ॥ १० ॥
निर्यातमन्धितलतो हरकण्ठमाप्य
पीयूषदीधितियुतं तु विहाय मन्ये ।
सर्पालिदुर्जनकुलेषु विषं सुखेन
तस्थौ सुखाङ्कटमनःसु मुदाऽऽस नन्दि ॥ ११ ॥
पक्षद्वयेऽपि मलिनः खलकौशिकोऽयं
दोषाकरेऽपि हि कलङ्किनि बद्धरागः ।
वित्रासहेतुरपि वामरवोऽपि वादं
काव्याध्वनि प्रवसतामिह हर्षकारी ॥ १२ ॥
सार्यौ सुधारसलसद्वचनप्रताने
क्व कालकूटनिवहस्य खलस्य चिन्ता ? ।
प्रद्योतने द्युतिमतीव वितन्वतीह
जागर्ति किं जगति करस्तमसोऽवकाशः ? ॥ १३ ॥
अन्यौ विधौ मखविधौ फणभृन्निवासे
मोहात् सुधामिह मुधा विबुधा वदन्ति ।
क्षारे क्षयिण्यथ शिखिप्रहते विषार्ते
सास्येव सत्यपरताखिललोकशोके ॥ १४ ॥

शक्तस्तव स्तवनमस्तगुणौघसङ्घय !
वाचस्पतेरपि समानमतिर्न कर्तुम् ।
मीनाति वीतमतिकः सिकताकणान् कः
कूलङ्कषाविपुलकूलतले सुराणाम् ॥ १५ ॥
निर्दोषतो वत नरोऽतिबलो विदन्तो
दन्तीव शूकर इवातिवपुर्विदंष्ट्रः ।
चक्रीव देवतवपुर्जितशत्रुजातः
सञ्जातवित्तविभवः पुरुषश्चकास्ति ॥ १६ ॥
केचित् सुरा इह भवे हितमाचरन्ति
नामुत्र केचिदिह नो परलोक एव ।
वामासुतः पुनरसाविह विघ्नहर्ता
दाता श्रियां परभवे शिवसौख्यकर्ता ॥ १७ ॥
बालोऽपि देवततिसंस्तुतपादपद्म-
युग्मस्य संस्तवनमस्य ततः करिष्ये ।
मन्त्राधिराजजिनभर्तुरमर्त्यनागे
किं माद्यतीह न गजाः प्रमदा भवन्ति ? ॥ १८

इति प्रस्तावना ।

दाता जितेन्द्रियचयोऽथनिरामयश्चा-
ऽमायो दयार्द्रहृदयो विनयावनम्रः ।
स्नातः प्रशस्तदिवसे धृतधौतवस्त्रः
शिष्यो गृहीतफलपुष्पसमृद्धगन्धः ॥ १९ ॥

सम्पूज्य पार्श्वजिनबिम्बमुपोष्य कृत्वा
　　वाचाम्लमुत्तमतपःप्रवरोऽत्र्जवारे ।
सज्ज्ञानचन्द्रधवलीकृतविश्वविश्वं
　　ब्रह्मव्रतस्थिततरं गुरुमित्थमाह ॥ २० ॥ युग्मम् ॥
कृत्वा प्रसादमसमं मयि पादलग्ने
　　मग्ने जडत्वजलधौ यदि योग्यतास्ति ।
मन्त्राधिराजवरयन्त्रयुतं तु मन्त्रं
　　पात्रे निधेहि भगवन् ! सुतरीसदक्षम् ॥ २१ ॥
हृज्जानुनाभिमुखमस्तकमस्य पञ्च–
　　तत्त्वाक्षरैस्तु सकलीकरणं विधाय ।
अभ्यर्चिते श्रवसि मन्त्रमथ त्रिवारं
　　पाणौ क्षिपेद् गुरुरमुष्य सुवर्णमम्भः ॥ २२ ॥
क्षेत्रे सुबीजमिव मे भवतां प्रसादान्
　　मन्त्रप्रभुः सफलतां कलयत्वमेयः ।
इत्थं वदन् नमति पादयुगं गुरूणां
　　शिष्यो यतो भवति कार्यकरः प्रणामः ॥ २३ ॥
इति प्रस्तावना–प्रदानविधिर्नाम प्रथमः पटलः ॥

श्रीअश्वसेनतनयं विनयावनम्र-
देवेन्द्रमौलिमणिरञ्जितपादपद्मम् ।
द्व्यंसालिकद्विभुजसन्धिगुदान्तकोण-
षट्कोणयन्त्रगतमादरतो नमामि ॥ ११ ॥
कुलकम् ।

पाषाणदुर्विषशरेभरिपुप्रहार-
मोघाम्बुवाहकरकाशनिसन्निभैस्तु ।
वाक्यैर्जघान शमिनं जनमाप्य तस्मा-
च्छान्तिं विवश कमठः शठतोज्झितोऽयम् ॥१२॥
श्रीस्तम्भने परमतो....कृतावतारं
वामासुतः परिगतोऽभयदेवसूरिः ।
कुष्टं पिनष्टि गलदङ्गमसौ स्म तस्माद्
वृत्तिं चकार गुरुरेष यतो नवाङ्ग्याः ॥ १३ ॥
श्रीपद्मदेवसुगुरोस्तपसोत्तमस्य
विस्फूर्तयोऽद्भुततमा हि यतो बभूवुः ।
यस्याक्षराणि तुरगावनिसम्मितानि
काष्ठौषधीपतिमितानि वदन्ति चान्ये ॥ १४ ॥
यस्माद् भवन्ति भविनां भुवि सिद्धयोऽष्टौ
कष्टं विनश्यति समस्तपमोह यस्मात् ।
तन्मन्त्रवर्णनिचयं स्थितिवर्णकर्म-
भेदैर्भणाम्यहमिहात्महिताय बालः ॥ १५ ॥
कलापकम् ॥

माले नीलं[1] दक्षिणेंऽसे च रक्तं[2] वामस्कन्धे पञ्चवर्णं[3] तु हस्ते ।
सिन्दूराभं[4] वामकुक्षौ तु धूम्रं[5] मेघश्यामं वामकट्यामरिष्म्[6] ॥१६॥

[8]मूर्यो वामे जानुनीहापि धूम्रं[7] वामे पादे पीतवर्णं [9]वदन्ति ।
नाभौ[10] विश्वस्वामिनः....पञ्चवर्णा धूम्रं वर्णलिङ्गं[11] भणन्ति ॥१७॥

वामे पादे[12] जानुकटयोः[13|14] सुवर्णवर्णान् कुक्षौ[15] दक्षिणे कृष्णवर्णम् ।
याम्ये हस्ते नीलवर्णं[16] समाहुः श्वेतौ प्राहुः सूरनोम्[17](?)ह्रंथिस्थौ॥१८

मुक्तावस्थं मस्तके[18] श्वेतमेव वर्णानेवं प्राहुरष्टादशापि ।
यन्त्रस्यान्तः षड् बहिः षट् षडेव कोणार्द्धेऽयं स्यात् क्रमः सर्वदैव॥१९॥

माले नीलं दक्षिणेंऽसे च रक्तं नाभौ वर्णं पञ्चवर्णं वदन्ति ।
विज्ञा वक्षस्यक्षरे श्वेतवर्णे शेषान् रक्तान् योगिनः केचिदाहुः ॥२०॥

इत्यक्षरविवक्षा ।

अथ मन्त्राधिराजस्य क(म)ठस्यैवोपदेशतः ।
प्रकटस्य तु बीजानां निष्पत्त्यतिशयौ ब्रुवे ॥ २१ ॥

निष्पन्नः प्रथमो वर्णस्त्वर्हतामशरीरिणाम् ।
आचार्याणामुपाध्यायमुनीनां प्रथमाक्षरैः ॥ २२ ॥

मोक्षसौख्यप्रदो भाले पार्श्वनाथस्य नीलरुक् ।
सकलो नादबिन्दुभ्यामुपेतस्तेजसां चयः ॥ २३ ॥

स एव दक्षिणे स्कन्धे रक्तवर्णस्तु चिन्तितः ।
जगद्वश्यमवश्यं हि प्रदत्ते योगिनां पुनः ॥ २४ ॥

शून्यवन्ह्यक्षरभवः प्रभवः सर्वसम्पदाम् ।
नादविन्दुकलोपेतः साकारः पञ्चवर्णरुक् ॥ २५ ॥

वामातनूजवामांससंस्थितो रूपकीर्तिदः ।
घनपुण्यप्रयःनानि जयज्ञाने ददात्यसौ ॥ २६ ॥

स एवेस्वरसंयुक्तः स्थितो हस्ते जिनेशितुः ।
योगिभिर्ध्यायमानस्तु रक्ताभोऽतिशयप्रदः ॥ २७ ॥

षष्ठस्वरयुतोऽरिघ्नो धूम्रवर्णः स एव हि ।
पूज्यतां विजयं रक्षां दत्ते ध्यातोऽस्य कुक्षिगः ॥ २८ ॥

विसर्गद्वयसंयुक्तः स एव श्यामलद्युतिः ।
जिनवामकटीसंस्थः प्रत्यूहव्यूहनाशनः ॥ २९ ॥

सर्वाशिवप्रशमनोऽञ्जनकान्तिर्विसर्गयुक ।
वामजानुस्थितो ध्यातः षड्विंशतितमोऽक्षरः ॥ ३० ॥

वामेयवामचरणे पीतवर्णः कषात्मकः ।
पिशाचग्रहभूतानां शाकिनीनां प्रमर्दनः ॥ ३१ ॥

सुवर्णभरहं नीलवर्णोकारसमन्वितम् ।
रक्तं प्रसकलं श्यामविन्दुं कुंभन्दनादयुक् ॥ ३२ ॥

नाभिपद्मस्थितं ध्यायेत् पञ्चवर्णं जिनेशितुः ।
तस्थुर्हरे षोडशामी सुवर्णद्युतयो जिनाः ॥ ३३ ॥

ऋषभोऽप्यजितस्वामी सम्भवोऽप्यभिनन्दनः ।
सुमतिः श्रीसुपार्श्वः श्रीश्रेयांसः शीतलोऽपि च ॥ ३४ ॥

विमलो ह्यनन्तजिनो धर्मः श्रीशान्तितीर्थकृत् ।
कुन्थुनाथो ह्यरजिनो नमिनाथो वीर इत्यपि ॥ ३५ ॥
ईकारे संस्थितौ पार्श्वमल्ली नीलौ जिनेश्वरौ ।
पद्मप्रभवासुपूज्यावरुणाभौ कलास्थितौ ॥ ३६ ॥
सुव्रतो नेमिनाथस्तु कृष्णाभौ बिन्दुसंस्थितौ ।
चन्द्रप्रभपुष्पदन्तौ नादस्थौ कुन्दसुन्दरौ ॥ ३७ ॥
हितं जयावहं भद्रं कल्याणं मङ्गलं शिवम् ।
तुष्टिपुष्टिकरं सिद्धिप्रदं निर्वृतिकारणम् ॥ ३८ ॥
निर्वाणाभयदं स्वस्तिशुभधृतिरतिप्रदम् ।
मतिबुद्धिप्रदं लक्ष्मीवर्द्धनं सम्पदां पदम् ॥ ३९ ॥
त्रैलोक्याक्षरमेनं ये संस्मरन्तीह योगिनः ।
नश्यत्यवश्यमेतेषामिहामुत्रभवं भयम् ॥ ४० ॥
द्वाविंशतितमो वर्णः पञ्चमस्वरसंयुतः ।
धूम्रवर्णो जिनेन्द्रस्य लिङ्गस्थानाग्रतः स्थितः ॥ ४१ ॥
वामेयदक्षिणे पादे रुद्रसङ्ख्याक्षरः स्वरः ।
हेमवर्णो जानुकट्योर्द्वाविमावेव सङ्गतौ ॥ ४२ ॥
खान्तं लान्तसमायुक्तः साकाशश्यामलद्युतिम् ।
वामेयदक्षिणे कुक्षौ मरुद्वर्णं विचिन्तयेत् ॥ ४३ ॥
साकारं नीलवर्णं तु त्र्यधिकत्रिंशदक्षरम् ।
विचिन्तयेज्जिनेन्द्रस्य संस्थितं दक्षिणे करे ॥ ४४ ॥
चिन्त्यमानमिदं वर्णपङ्क्तं च संस्मृतं सदा ।
योगिभिर्ध्यानिभिःपूर्णैर्जिनधर्मपरायणैः ॥ ४५ ॥

तोयानिलविषादीनां ग्रहराजाजिरक्षसाम् ।
अरातिमारिदस्यूनां श्वापदानां भयं हरेत् ॥ ४६ ॥
श्रीपार्श्वनाथवक्षोजयुग्मे कुन्दसमद्युती ।
रुद्रार्यमस्वरौ चिन्त्यावाद्यस्याधिपतिर्जया ॥ ४७ ॥
शिवा शान्तिकरी तुष्टिपुष्टिस्वस्तिकरी हि सा ।
विजयान्यस्य वर्णस्य ते चामरपरे उभे ॥ ४८ ॥
त्रैकालमक्षरमूर्ध्नि कोणे रेखोपरि स्थितम् ।
हिमेन्दुकुन्दसङ्काशं पार्श्वनाथस्य चिन्तयेत् ॥ ४९ ॥
जातरूपसमाकारा यन्त्ररेखासु कारयेत् ।
मन्त्रयन्त्रात्मकं पार्श्वमित्थं योगी विचिन्तयेत् ॥ ५० ॥

ह्रँो वामकांसशिखरस्य तु मध्यगो ह्रीं
ह्रामङ्गदो ह्र इति कूर्परमध्यदेशे ।
यः कूर्पराग्रवसतिस्तु कलाचिकास्थो
नाभेरधो विहितहुः स्फुटपार्श्वनाथः ॥ ५१ ॥

गे दक्षिणानघविशालकलाचिकान्तः
यः कूर्परान्तरगतोऽवनदग्रगष्ठः ।
स्वा बाहुरक्षकमयः शुभहांसकाग्रा–
स्तन्मध्य उमिति कृतप्रकृतिः श्रियेऽस्तु ॥ ५२ ॥

नादाग्रबिन्दुतलचन्द्रकलाशिरस्क–
ब्रह्मस्वरूपममलं जिनपार्श्वनाथम् ।
रम्भादलाभवपुषं हि निजे ललाटे
ध्यायन्ति ते त्रिजगतीं प्रविलोकयन्ति ॥ ५३ ॥

चन्द्राभनादसितबिन्दुकलारुणत्व-
भास्वत्सुवर्णभद्दरं शिर ई विनीलम् ।
ये बीजमेतदनघं सुधियः स्वनाभौ
ध्यायन्ति ते त्रिजगतीं प्रविलोकयन्ति ॥ ५४ ॥

शीतांशुनिर्मलजयाविजयास्वरूप-
रुद्रार्यमस्वरयुगप्रथितप्रचारम् ।
ये दक्षिणोत्तरकुचस्थितमध्यभागे
ध्यायन्ति तेऽभिजगतीं प्रविलोकयन्ति ॥५५॥

षट्कोणयन्त्रवलये नवपार्श्वरूप-
भास्वत्किरीटमणिरश्मिविवृद्धशोभम् ।
ध्यायन्ति ये निजशरीरकृतावतारं
ते नाथ ! शाश्वतपदाश्रयिणो भवन्ति ॥ ५६ ॥

देवोऽष्टादशदोषवर्जितपुरोऽष्टमातिहार्यान्वितो
नानावंशनिवेसतारनयनः सर्वप्रभावैर्युतः ।
स्फूर्जत्कर्मकरीन्द्रविद्रवहरिः फणाटकस्फूर्तिमान्
वामेयः कमठासुरेण चिनतः पायादपायादसौ ॥५७॥

इति मध्यवलये जिनेन्द्रमन्त्रव्यावर्णनो नाम
द्वितीयः पटलः। मं० ७७

## तृतीयः पटलः ।

भक्तिप्रह्वेन्द्रालीवन्द्यः फणिपरिवृढफणनिवहैः कृतातपवारणः
श्रीमत्पार्श्वस्त्रैलोक्यकक्षितिहरणविहितसुमतिर्हताघततिर्जिनः
प्राज्यस्फूर्जत्कर्मस्तम्भेरमगणकटदलनहरिर्विनीलतनुच्छवि–
र्वित्तं कीर्तिं सिद्धिं दद्यादतिशयसमुदयसहितो जितातुलमोहम (?)॥१

भुजङ्गविजृम्भितवृत्तम् ।

मन्त्राधिराजवलये विमले द्वितीये
षट्चन्द्रकोष्ठकयुते १६ परितः स्थिताश्च ।
विद्याखुरी रसविधि १६ प्रमिता हि युक्ता
वर्णास्त्रवाहनभुजैरथ संस्तवीमि ॥ २ ॥

गोवाहना कुन्दसमानवर्णा चापाक्षमालाशरशङ्खहस्ता ।
चतुर्भुजा भूषणभूपिताङ्गी सा रोहिणी नो दुरितानि हन्तु ॥ ३॥

त्रिशूलदण्डाभयबीजपूर–हस्ता प्रशस्ता वरलोहिताङ्गी ।
या देवता प्रज्ञपतीति नाम्नी सगासनस्था दुरितानि हन्तु ॥४॥

श्वेतद्युतिर्या वरदानपद्मसत्शृङ्खलारुद्चभुजा........भा ।
या वज्रपूर्वा भुवि शृंखलाख्या पद्मासनस्था दुरितानि हन्तु ॥५॥

जाम्बूनदाभा गजगामिनी हि फलाक्षमालाङ्कुशशूलपाणिः ।
अनेकदेवाभिनता नताङ्गी वज्राङ्कुशी नो दुरितानि हन्तु ॥६॥

या भिन्नवर्णा नरवाहनस्था भुजैश्चतुर्भिर्धृतभव्यचक्रा ।
विभूषणालङ्कृतदेहभागा चक्रेश्वरी नो दुरितानि हन्तु ॥ ७ ॥

रक्ताब्जवद्धासनसंस्थितिर्या हेमप्रभा खेटकखड्गहस्ता ।
सबीजपूराभयदानशस्ता नृदत्तनाम्नी दुरितानि हन्तु ॥ ८ ॥

घनाघनाभा कमलासनस्था त्रिशूलमालावरमुद्गराङ्का ।
काली कलाभासुरसच्छरीरा सा देवता नो दुरितानि हन्तु ॥९॥

कलापिकण्ठावलिनीलदेहा सरजमालावरघण्टिकाङ्का ।
नृपृष्ठसंस्था तु महेतिपूर्वा सा कालिका नो दुरितानि हन्तु ॥१०॥

उत्तप्तजाम्बूनदमूर्तिकान्तिः ककुद्मवाहाभिरता वराङ्गी ।
अब्जक्षमालावरदण्डहस्ता गौरीति देवी दुरितानि हन्तु ॥ ११ ॥

धाराधराकारशरीरयष्टिः सहस्रपत्रासनसंस्थिता या ।
त्रिशूलदण्डाभयदानहस्ता गान्धारिदेवी दुरितानि हन्तु ॥१२॥

श्वेतच्छदस्था सितरोचिरङ्गा चतुर्भुजन्यस्तसरीसृपाङ्का ।
चतुर्भुजा या तु महेतिपूर्वा ज्वालाभिधाना दुरितानि हन्तु ॥१३॥

या भिन्नवर्णा कमलासनस्था वृक्षाक्षमालावरदानपाणिः ।
सा मानवी मानवनम्यपादपद्मद्वया नो दुरितानि हन्तु ॥१४॥

विहङ्गराजासनबद्धसंस्था पयोधराभा भुजगेन्द्रपत्नी ।
फणीन्द्रयुग्मासिसुखेटकाङ्का वैरोट्यदेवी दुरितानि हन्तु ॥१५॥

तुरङ्गवाहा सितनित्यकाया खड्गासिपत्रीशरखेटकाङ्का ।
या जातरूपप्रतिजातरूपा अच्छुप्तदेवी दुरितानि हन्तु॥१६॥

हेमांशुरोचिः प्रतिमा नितान्तश्वेतच्छेदस्था धृतशूलमाला ।
वरप्रसन्नाननपूर्णचन्द्रा सा मानसी नो दुरितानि हन्तु ॥ १७ ॥

---

१– मानुषी क ।

सारङ्गसंस्था हिमरोचिराभा भृङ्गारखड्गाभयखेटकाङ्का ।
श्रीमानसी यापि महेति पूर्वा सा देवता नो दुरितानि हन्तु ॥१८॥

द्विरष्टविद्यावरदेवतानां स्पष्टाक्षरं स्तोत्रमिदं पठेत् यः ।
स प्रीतियोगं लभते मनुष्यः श्रीपार्श्वतः सागरचन्द्ररूपम् ॥१९॥

वामासुतक्रमकुशेशयभृङ्गभावं
ये बिभ्रतीह भविका मुदिताशयास्तु ।
तेषां गृहेषु दुरितप्रकरंहरन्त्य-
स्तन्वन्ति शान्तिकममूस्त्रिदशाङ्गना हि ॥ २० ॥

इति विद्यादेव्यः ।

ततस्तृतीये वलये ह्यमुष्य स्थिताश्चतुर्विंशतिकोष्ठकेषु ।
स्तवीमि सर्वज्ञतते: सवित्रीर्जगत्त्रयीवन्दितपादपद्माः ॥ २१ ॥

श्रीमरुदेवी विजया सेना देवी ततश्च सिद्धार्था ।
स्यान्मङ्गला सुसीमा पृथिव्यथो लक्ष्मणा देवी ॥ २२ ॥

रामा नन्दा विष्णुर्जया ततः श्यामिकाथ सुयशा च ।
स्यात् सुव्रताऽचिरापि श्रीरथ देवी प्रभावती पद्मा ॥ २३ ॥

वप्रा शिवाथ वामा त्रिशला देवी च....जिनजननीः ।
निजनिजपुत्रसमेता एताः सन्ततमहं नौमि ॥ २४ ॥

इति जिनजनन्यः ।

तुर्ये जिनेन्द्रवलये जलधिद्वि २४ कोष्ठे
यक्षान् जिनेन्द्रपदपङ्कजचञ्चरीकान् ।

वर्णासनाननभुजायुधकीर्तनेन
स्तोष्यामि कामितददानहमादरेण ॥ २५ ॥

हेमच्छविर्गजगतिर्वरजापमाला-
संयुक्तदक्षिणकरो वृषभस्य भक्तः ।
सन्मातुलिङ्गकलपाशगवामपाणि-
र्दद्यात् सुखानि मम गोमुखयक्षराजः ॥ २६ ॥

श्यामो गजेन्द्रवदनो वरतुर्यवक्त्रो
याम्येऽक्षदामवरमुद्गरपाशपाणिः ।
सन्मातुलिङ्गसृणिशक्त्यभयाङ्कवाम-
पाणिर्महोदयदयक्षवरः सदा(वो)ऽस्तु ॥ २७ ॥

धाराधरच्छविरवत्वभयाहिशत्रु-
रङ्गद्गदायुगपसव्यभुजस्त्रिनेत्रः ।
नागाक्षसूत्रफलवामकरः शरीरं
सर्पासनस्थितिरयं त्रिमुखो मदीयम् ॥ २८ ॥

श्यामो गजेन्द्रगतिरीश्वरनामधेयः
सन्मातुलिङ्गजपमालिकयात्तहस्तः ।
चम्चकुशप्रवरवामकरः पुनातु
तुर्योऽभिनन्दनजिनक्रमपद्मभृङ्गः ॥ २९ ॥

शीतद्युतिच्छवितनुर्वरशक्तियुक्त-
हस्तो गदोरगपपाशगवामपाणिः ।
यो वैनतेयगमनो दुरितापहारी
यक्षः स तुम्बर इह प्रथितप्रभावः ॥ ३० ॥

रम्भादभाभवपुरेपकुमारयानो
यक्षः फलाभयपुरोगभुजः पुनातु ।
बभ्चक्षदामयुतवामकरस्तु गात्रं
पद्मप्रभक्रमगतः कुसुमाभिधानः ॥ ३१ ॥
दुर्वाङ्कुराकृतिरिभासनवक्त्रसंस्थो
व्रलद्रुबिल्वयुतदक्षिणपाणियुग्मः ।
मातङ्ग एष नकुलाङ्कुशवामहस्तो
विघ्नव्रजं हरतु नः सततं त्रिहस्तः ॥ ३२ ॥
हंसासनस्त्रिनयनो विजयो विनीलो
दद्याज्जयं हि मम मुद्गरचक्रपाणिः ।
श्वेतोऽजितः कमठगोऽभयमातुलिङ्ग-
पाणिस्तनुं नकुलकुन्तकरः पुनातु ॥ ३३ ॥
पीयूषदीधितिसितः कमलासनस्थो
ब्रह्माभिधस्त्रिनयनोऽथ चतुर्मुखश्च ।
सन्मातुलिङ्गवरमुद्गरपाशपाणि-
र्जाप्यस्त्वगङ्कुशगदानकुलाङ्कहस्तः ॥ ३४ ॥
पीयूषपानधवलो वृषयानयानो
यक्षो ददातु सुखमीश्वरनामधेयः ।
पाणिद्वयीधृतगदाकलमातुलिङ्ग-
बभ्चक्षदामयुतवामकरस्त्रिनेत्रः ॥ ३५ ॥
कुन्दद्युतिर्वरमरालगतिः कुमारो
यक्षोऽथ दक्षिणभुजेषु फलैः प्रशस्यः ।

विभ्रद् धनुः सनकुलं त्विह वामपाणि-
युग्मे ददातु सुखमेष चतुर्भुजश्च ॥ ३६ ॥

चक्राक्षदामफलशक्तिभुजङ्गपाश-
खड्गाङ्कदक्षिणभुजः सितरुक् सुकेकी ।
चक्राङ्कुशाभयधनुः फलकोरगारि-
पाणिः श्रियं दिशतु षण्मुख एष यक्षः ॥ ३७ ॥

पद्मासनस्त्वरुणरुक् त्रिमुखस्त्रिनेत्रः
षट्पाणिरम्बुजकृपाणसुपाशपाणिः ।
पातालनामकलितः फलकाक्षमाला-
वम्चङ्कवामभुजयुग् दुरितानि हन्तु ॥ ३८ ॥

कूर्मस्थितस्त्रिवदनोरुणरुक्शरीरः
सद्बीजपूरमभयं च गदां दधानः ।
याम्यैः करैर्नकुलपङ्कजजापमाला-
वामैः करैर्हरतु किन्नर एष दुःखम् ॥ ३९ ॥

धाराधरद्युतिकलः करिवाहनस्थः
सन्मातुलिङ्गजलजे भुजयोर्दधानः ।
वम्चक्षदामयुतवामकरो वराह-
यक्षस्त्वयं मम सुखानि ददातु चपः ॥ ४० ॥

पानीयपूरभृतनीरदतुल्यदेहः
प्रत्यूहसञ्चयमभिनत्तु हंसयानः ।
गन्धर्व एष वरपाशभृदभ्यपाणिः
सन्मातुलिङ्गसृणिवामकरो मदीयम ॥ ४१ ॥

यक्षोऽसितो वृषगतिः शरमातुलिङ्ग-
शूलाभयासिकलमुद्गरपाणिषट्कः ।
शूलाङ्कुशस्रगहिवैरिधनूंषि बिभ्रद्
वामेषु खेटकयुतानि हितानि दद्यात् ॥४२॥

इन्द्राश्मकान्तिरिभराजगतिः कुबेरः
शूलाभये वरकुठारयुते दधानः ।
याम्येषु मुद्गरजपस्रजमग्र्यशक्तिं
सद्बीजपूरमपरेषु करेषु रातु ॥ ४३ ॥

कर्पूरपूरधवलोऽष्टभुजो वृषस्थ-
स्त्र्यक्षो जटी फलगदाशरशक्तिपाणिः ।
चापं कुठारमुदजं नकुलं दधानो
वामेष्वघस्य वरुणो हरणाद्यतः स्यात् ॥ ४४ ॥

स्वर्णद्युतिर्वृषगतिश्चतुराननश्च
त्र्यक्षोऽष्टपाणिरघहृद् भृकुटिर्विवेत्तः (स वोऽस्तु) ।
याम्ये फलाभयसुमुद्गरशक्तिपाणि-
र्वज्राक्षसूत्रपरशूरगवैरिपाणिः ॥ ४५ ॥

षट्पाणिरम्बुदविभो नृगमिस्त्रिनेत्रो
गोमेध एष सुखमाप्तजनस्य दद्यात् ।
सद्बीजपूरपरशावथ चक्रमग्र्य-
हस्तेषु शक्तिनकुलौ दधदग्र्यशूलम् ॥ ४६ ॥

श्यामो गजेन्द्रवदनोऽहिफणाढ्यमूर्धा
स्यात् कूर्मगः सुखकरः किल पार्श्वयक्षः ।
सन्मातुलिङ्गभुजगाब्जपसव्यगौ च
बभ्रूरगावितरतः सततं दधानः ॥ ४७ ॥

श्रीवर्द्धमानजिनपादमरालुलीलः
श्यामो गजेन्द्रगमनो द्विभुजः पुनातु ।
मातङ्गयक्ष इह मङ्गलसिद्धिकारी
सद्बीजपूरनकुलौ भविनं दधानः ॥ ४८ ॥

नामाद्भुतक्रमकुशेशयमात्मचित्ते धत्ते हि योऽनवरतं नवरङ्गभक्तिः ।
यक्षावली किल विलीनविपक्षलक्षस्यामुष्य शान्तिमियमोकसि सन्तनोतु ४९

इति यक्षाः ।

नानाननायुधकराङ्गरुचिप्रभेदाः
सङ्कीर्त्तयाम्यहमतः स्थितिमादधानाः ।
यक्षाङ्गनाश्च वलये जिन२४सङ्ख्यकोष्ठे
यन्त्रस्य चास्य किल पञ्चमके सुकेश्यः ॥ ५० ॥

तार्क्ष्यस्थितिः कनककान्तितनुस्तु पाश-
चक्रेषुपुङ्खवरदक्षिणपाणिरेषा ।
चक्राङ्कुशाशनिधनुर्युतवामहस्ता
चक्रेश्वरी सुखकरी भविनां सदा स्यात् ॥ ५१ ॥

क्षीरार्णवोर्मिचयनिर्मलदेहकान्ति-
र्लोहासनाऽहिवरपाशयुताभ्यपाणिः ।

सद्बीजपूरश्रृणिसङ्गतवामहस्ता
भूयादियं हि विजया विजयाय पुंसाम् ॥५२॥
देवी तुषारगिरिसोदरदेहकान्ति-
र्दद्यात् सुखं शिखिगतिः सततं परीताः ।
जापस्रजं परमियं तु फलाभये तु
सम्बिभ्रती भुजचतुष्टयशोभमाना ॥ ५३ ॥
सा कालिका मधुकरोत्करतुल्यदेहा
पद्मासनासिवरपाशगयाम्यपाणिः ।
नागाङ्कुशावितरपाणियुगे वहन्ती
सौख्यान्यसावसुभृतां विनता ददातु ॥ ५४ ॥
सम्मोहिनी कनकरुक् वरपाशहस्ता
दद्यान्मुदं फलश्रृणीं दधती कजस्था ।
श्यामा नृयानगतिकृद् वरबाणपाणि-
श्चापाभयान्वितकराप्यथ मानसी च ॥ ५५ ॥
ज्वालाकरालवदना द्विरदेन्द्रयाना
दद्यात् सुखं वरमथो जपमालिकां च ।
पाशं श्रृणिं मम च पाणिचतुष्टयेन
ज्वालाभिधा च दधती किल मालिनीव ॥ ५६ ॥
पीता वराहगमना ह्यसिमुद्गराङ्का
भूयात् कुठारफलभृद् भृकुटिः सुखाय ।
चाण्डालिका हिमसमा वरजापमाला-
युग्गोपतिश्च कलशाङ्कुशवामहस्ता ॥ ५७ ॥

गोमेधिका सवरपाशकराऽम्बुजस्था
नीला फलाङ्कुशकराऽभिमतानि दद्यात् ।
सिंहस्थितिर्हिमसमा वरमुद्गराङ्का
विद्युन्नदा भवतु कुम्भश्रृणी दधाना ॥ ५८ ॥

कृष्णाजिता तुरगगा वरशक्तिहस्ता
भूयाद्धिताय सुमदामगदे दधाना ।
पीतप्रभा कमलगा शरपाशहस्ता
चापाहिपाङ्कितकरा च विजृम्भिणीव ॥ ५९ ॥

पद्मासना वरभृता हिमरुक् सपाश-
खड्गान्विता सुखकरा श्रृणखेटकाङ्का ।
कन्दर्पिकाथ झषगोत्पलमङ्कुशं च
पद्मद्वयं हिमसमासि....वहन्ती ॥ ६० ॥

कुन्दद्युतिः कमलगोत्पलपुस्तकाङ्का
स्याद्धारिणी वरकमण्डलुयुक् सुखाय ।
गान्धारिणी शिखिगतिः किल बीजपूर-
शूलान्वितोत्पलयुगद्विकरेन्दुगौरा ॥ ६१ ॥

नीलोत्पलं कलमथाम्बुजमक्षसूत्रं
काली तमालदलरुक् कजमावहन्ती ।
कृष्णा मुदे जलदभा वरजापमाला-
युक् शक्तियुक्फलकरा वनजातदेवी ॥ ६२ ॥

भद्रासना हिमसमा वरजापमाला-
पाशिः सुगन्धिरिह शूलफलाभ्युपेता ।
श्वेता मरालगमना सुममालिनी शं
दद्याद्दर्शि वरफलं फलकं वहन्ती ॥ ६३ ॥

कुष्माण्डिनी कनककान्तिरिभारियाना
पाशाम्रलुम्बिसृणिसत्फलमावहन्ती ।
पुत्रद्वयं करकटीतटगं च नेमि-
नाथक्रमाम्बुजयुगं शिवदा नमन्ती ॥ ६४ ॥

पद्मावती भुजगराजवधूर्विधूत-
विघ्ना सुवर्णतनुकुर्कुटसर्पयाना ।
पाशाम्बुजाश्चितकरा त्रिफणाढ्यमौलिः
पायात् फलाङ्कुशविराजितवामपाणिः ॥ ६५ ॥

सिद्धार्थिका नवतमालदलालिनील-
रुक् पुस्तिकाभयकरा नखरायुधाङ्का ।
वीणाफलाङ्कितभुजद्वितया हि भव्या-
नव्याजिनेन्द्रपदपङ्कजबद्धभक्तिः ॥ ६६ ॥

श्रीअश्वसेनतनयं विनयावनम्रा
ध्यायन्ति ये स्वहृदये विगतान्यकृत्याः ।
यक्षाङ्गना जिनपतीनिव तान्नताङ्च-
आराधयन्ति सततं दुरितं हरन्त्यः ॥ ६७ ॥

इति यक्षिण्यः ।

एतस्य लाञ्छनतनुच्छविदेहमान-
नामानुवादजननीजनकाभिधानैः ।
स्तोष्ये जिनानहमिमान् वलये स्थितांश्च
पष्ठेऽधुनेह परितो हितहेतवेऽपि ॥ ६८ ॥

श्रीनाभिभूपमरुदेविभवो वृषाङ्को
गाङ्गेयगौरशरपञ्चधनुःप्रमाणः ।
संसारसागरवितारतरी विनेता-
स्वामी शिवं दिशतु मे स युगादिनाथः ॥ ६९ ॥

अष्टापदद्युतिधरो द्विरदेन्द्रचिन्हः
पञ्चाशतीशतचतुष्टयचापतुङ्गः ।
दद्यान्मतानि विजयाजितशत्रुपुत्रो-
ऽयोध्याजनिर्जिनपतिस्त्वजितो द्वितीयः ॥ ७० ॥

गाङ्गेयभः शतचतुष्टयचापदेहः
श्रावस्तिपूःकृतजनिस्तुरगाङ्किताङ्गः ।
सेनाजितारितनयो विनयान्ततोऽयं
श्रीसम्भवः प्रभवताच्छ्रियतातये वः ॥ ७१ ॥

सिद्धार्थसंवरसुतः कपिपोतचिन्हो-
ऽयोध्याजनिर्मथितमन्मथसङ्कथस्तु ।
हेमद्युतिः खशरवन्हिधनुःशरीर-
मानोऽभिनन्दनजिनो भविनः पुनातु ॥ ७२ ॥

हेमद्युतिस्त्रयधनुःशतदेहमाना-
ऽयोध्याजनिर्नृपतिमेघरथाङ्गजन्मा ।
चक्राङ्कितः सुवनतः किल मङ्गलाभू-
र्भूयादयं भवभिदे सुमतिर्जिनेशः ॥ ७३ ॥

पञ्चशतीद्विशतचापतनुं सुसीमा-
श्रीमद्धराभिधनृपप्रभवो विभूतिम् ।
कौशाम्बिभूकृतजनिर्जलजाङ्कलक्ष्मा
पद्मप्रभोऽरुणतनुर्वितनोतु देवः ॥ ७४ ॥

वाराणसीकृतजनिः फणपञ्चकाङ्को
हेमद्युतिः शतधनुर्द्वितयप्रमाणः ।
श्रीमत्प्रतिष्ठपृथिवीतनयो विभूति
मत्स्वस्तिको जिनपतिर्जयतात् सुपार्श्वः ॥ ७५ ॥

व्योमेषुशीतरुचिसङ्ख्यधनुःप्रमाणः
श्रीलक्ष्मणाजठरभूर्महसेनपुत्रः ।
चन्द्राङ्कचन्द्ररुचिचन्द्रपुरीसुजन्मा
चन्द्रप्रभः प्रभवतां भवभीभिदे वः ॥ ७६ ॥

कामन्दकीकृतजनिः शतचापतुङ्गो
रामाङ्कभूर्धवलरुग् मकराङ्कचिन्हः ।
देवेन्द्रवन्द्यचरणः सुविधिर्विभूतिं
सुग्रीवभूर्वितरतां मम पुष्पदन्तः ॥ ७७ ॥

श्रीवत्सयुग् नवतिचापतनुप्रमाणो
नन्दासुतो दृढरथान्वयमण्डनोऽयम् ।

उत्तप्तहेमरुचिर्भद्दिलपूः सुजन्मा
श्रीशीतलोऽवतु जनं किल शीतशीलः ॥ ७८ ॥
श्रेयांस एप कलधौतसमो ह्यशीति-
चापोच्चदेह इह गण्डकलाञ्छनस्तु ।
श्रीविष्णुभूमिपतिविष्णुवधूतनूजः
श्रेयांसि यच्छतु सुसिंहपुराधिजन्मा ॥ ७९ ॥
रक्तप्रभो महिपलाञ्छनलाञ्छिताङ्ग-
श्चम्पाजनिस्त्वथ जयावसुपूज्यपुत्रः ।
यश्चापसप्ततितनुप्रमितिर्मतानि
श्रीवासुपूज्यजिन एप सतां ददातु ॥ ८० ॥
श्यामाभवो ह्यवनिभृत्कृतवर्मपुत्रः
काम्पिल्यपत्तनजनिः कनकावदातः ।
कोदण्डपष्टितनुयष्टिरसौ वराह-
लक्ष्मा ददातु विमलः कमलां जिनेशः ॥ ८१ ॥
श्येनाङ्कसिंहरथभूः कनकत्त्वयोध्या-
जन्मा विनीतसुरसंस्तुतपादपद्मः ।
व्योमेपुकार्मुकतनुः सुयशातनूजो
दद्यादनन्तसुखमेप जिनस्त्वनन्तः ॥ ८२ ॥
वज्राङ्क ! रत्नपुरसम्भव ! हेमकान्ति-
श्रीभानुभूपकुलदीपक ! सुव्रताभूः ।
पञ्चाब्धिकार्मुकतनो ! जितमन्मथेश !
श्रीधर्मनाथ ! जय नाथ ! कृताधिनाथ ! ॥ ८३ ॥

सञ्जातरूपवररूपधरो मृगाङ्कः
श्रीविश्वसेननृपभूरचिरातनूजः ।
व्योमाब्धिचापतनु-हस्तिपुरात्तजन्मा
शान्तिं तनोतु भविनामिह शान्तिनाथः ॥ ८४ ॥

श्रीसम्भवो गजपुरप्रतिलब्धजन्मा
हेमद्युतिः शरकृशानुधनुःप्रमाणः ।
यः छागलाञ्छनधरो नृपशूरजातो
देवो व्यपोहतु तमो मम कुन्थुनाथः ॥ ८५ ॥

त्रिंशद्धनुस्ततवपुः कनकाभ ! नन्दा-
वर्ताङ्क ! नागपुरसम्भव ! देववन्द्य ! ।
देवीहृदम्बुजरवे ! च सुदर्शनाङ्ग-
जातारनाथ ! घननाथभवारिमारे ॥ ८६ ॥

श्रीमल्लिनाथ ! कदलीदल नीलदेह !
पञ्चद्विकार्मुकतनो ! नृपकुम्भपुत्र ! ।
श्रीमत्प्रभावतिजने ! मिथिलापुरीज !
कुम्भाङ्क ! भाविनरनेन्तरमर्त्यजन्म (?) ॥८७॥

तैलाक्तकज्जलकेलवर ! कूर्मचिन्ह !
त्रिंशद्धनुस्तनुविमान ! सुमित्रसूनो ! ।
पद्मावतीप्रभव ! राजगृहात्तजन्मा
जन्माघसङ्घमपिघातय सुव्रतार्हन् ! ॥ ८८ ॥

हेमद्युतिः कलविनीत महोत्पलाङ्कः
पञ्चेन्दुकार्मुकतनुर्मिथिलापुरीस्थः ।
वप्राभवो विजयभूपतिलब्धजन्मा
स्याच्छान्तये नमिजिनो भविनां तु नाम ॥८९॥

श्रीमत्समुद्रविजयात्मज ! शङ्खचिन्ह !
कृष्णाङ्ग ! चापदशकोच्चतनो ! मतो नः !
श्रीमच्छिवाभव ! भवाघभवाधिहीनं
श्रीनेमिनाथ ! कुरु शौर्यपुरावतंस ! ॥ ९० ॥

वाराणसीपुरजने ! कदलीदलाभ !
सर्पाङ्क ! हस्तनवकोच्चशरीर ! धीर ! ।
श्रीअश्वसेनकुलपङ्कजराजहंस !
वामातनूज ! जय मोक्षद ! पार्श्वनाथ ! ॥ ९१ ॥

सिद्धार्थपार्थिवभव ! त्रिशलातनूज !
हेमद्युते ! हि भुजसप्ततनुप्रमाण ! ।
कण्ठीरवप्रकटलाञ्छन ! वाञ्छितार्थं
श्रीवर्द्धमान ! मम देहि विमानमाय ! ॥ ९२ ॥

यश्चित्ते मुदितेऽवसोय सुपदद्वन्द्वं विधत्ते शिवं
शश्वद्वासनया प्रज्पदायो (?) मायः सुकायः पुमान् ।
एते वीतमदाः सदा दिविपदां वृन्देन ये वन्दिताः
सानन्दं शिवसम्पदं शमदयावन्तोऽस्य दद्युर्जिनाः ॥९३॥

इति जिनाः ।

त्रैलोक्यख्यातवर्णस्तपन इव तमस्तोमहर्ता नितानं
विस्फूर्जद्विन्दुनादो निजपरशिरसीकारमात्तस्तु सञ्जो।
एतद् यन्त्रं समस्तं क्षितिवलयमिवाम्भोनिधिं व्याप्य सिद्धो
मायावर्णाभिधानः स्थित इति सततं योगिभिर्ध्याय एव ॥९

इति मायावर्णः

एतद् यन्त्रं बहिःपीठे यद् धरायां व्यवस्थितम्।
न तस्याराधकाः सूत्रयन्ति यतो भणाम्यहम् ॥ ९५ ॥

एकचक्ररथ उष्णमयूषः सप्तसप्तिरिह पङ्कजहस्तः।
सेवतेऽरुणरुचिः शुचिचेताः पार्श्वनाथपदपङ्कजमर्कः ॥ ९६ ॥

क्षीरसागरतरङ्गसमाङ्गः श्वेतवाजिदशकस्तु शशाङ्कः ।
सर्वदा जिनपतिक्रमसेवासङ्गि मानसमसावपि धत्ते ॥ ९७ ॥

मङ्गलोऽयमथ हिङ्गुलवर्णः शक्तिपाणिरिह मङ्गलहेतुः ।
भक्तियुक्तिपरिभावितचित्तः सेवते क्रमयुगं जिनभर्तुः ॥ ९८ ॥

बाणबाणधिशराशनपाणी रोहिणीरमणसंहृत्त एषः ।
नीलदेहरुचिरस्य जिनस्य पादसेवनविधिं विदधाति ॥ ९९ ॥

स्वर्णकेतकसमानशरीरो वाक्पतिर्जिनपतिस्तुतिकारी ।
निर्जितामर मलि (?) लहरीभिस्तर्जितामृतरसोत्तमगीर्भिः ॥ १००

भार्गवोऽसुरवितानविनताङ्घ्रिः क्षीरनीरनिधिगौरशरीरः ।
सेवते क्रमयुगं जितभर्तुरश्वसेनकुलपङ्कजभानोः ॥ १०१ ॥

चण्डदीधितिसुतोऽपि सुचेतोदुःखनीरनिधितीरगमाय
सेवते जिनपतिं बत धूमस्तोमकान्तिरिह दण्डधरश्च ॥ १०२ ॥

ही शरीररहितोऽपि हिताय सिंहिकासुत इतोऽपि जिनेशम् ।
पश्यति प्रतिकलं कलभक्तिः स्यन्दनं तिमिरभो ह्यधिरूढः ॥१०३

देवदेवमभिवन्दति केतुः पातकाम्बुनिधिबन्धनसेतुः ।
खड्गपाणिरिह पादतलस्थश्चित्रवर्ण इव कल्मुषमालः ॥ १०४ ॥

ये जिनं निजमनस्युरुभक्तिव्यक्तरोमनिवहाङ्कुरसाराः ।
संवहन्ति विपसा अपि तेषां खेचरा मुदमिवेह वयस्याः ॥ १०५ ॥

इति ग्रहनवकम् ।

बहुनेत्रसम्भववपुर्भगतां शमितुं जिनेन्द्र ! चरणौ शरणम् ।
तव देवराडिव नवस्तवनं कुरुतेऽनिशं समभिगम्य मुदा ॥ १०६ ॥

निजतापसम्पदभितः शमितुं तव सेवते चरणयुग्ममिव ।
ज्वलनस्फुलिङ्गपटलाकुलितं वपुरुद्वहन्निह महःखचितम् ॥१०७॥

बहुजन्तुघाततपातकतोऽञ्जननिभं महिषयानगतिः ।
वपुरुद्वहन्निव नयस्तवकृत तव च दण्डपाणिरिह तच्छमितुम् ॥१०८॥

सकलाम्बुदद्युतिरिव स्तुतिकृत् तव देव ! पादयुगलं नमति ।
नृकपालपाणिरिव रौद्ररसं शमितुं श्रितः प्रशमवारिनिधे: ॥१०९॥

निननाद ते जडपतिर्वरुणश्चरणस्तुतिं बत जिनाऽयि कथम् ? ।
तव भक्तिरेव मुखरीकुरुते त्वथवा जनं जडमपीह विभो ! ॥११०॥

चपलकुरङ्गतराशुबलः पवनः स्मवन्नमति श्रयति ।
तव पादयुग्ममत एव जगत्सदसु स्वरूपमतदेव जिन ! ॥ १११ ॥

धनदोऽन्धकारचितिहिताश्रयतोऽस्यभवत् कुबेर इति नामयुतः ।
प्रभजन् पदे हि तव पुण्यनिधेर्विदितस्तु पुण्यजनराडिति सः॥११२॥

भसितत्रिनेत्रकदिगम्बरताभुजगास्थिरुपणच्छटापटलिः ।
वहतः शिवाश्रयसुतोनवपुर्भवतो भवस्य शिवनाम भुवि ॥११३॥
विधिरच्छवत् स्तुतिवचःसलिलैरभिवर्षति प्रतिजिनं यदिह ।
विमलीकरोति तदघं दुहितुः सुरताभिलापजनिपङ्कमिव ॥ ११४ ॥
वलिधामसंस्थितिरभसं नमति स्तवसेवनं च नमनं नमितः ।
वदयन्त ईदृगतिसङ्गतिमन्निजवित्तमत्र....दति प्रकटाम् ॥ ११५ ॥
प्राच्यामिन्द्रो वन्हिराग्नेयकोणे याम्यासंस्थो दण्डपाणिस्ततोऽपि ।
रक्षोराजः स्याच्च नैऋत्यसंस्थो यादोनाथः पश्चिमाशाकृतास्थः ॥११६॥
वायव्यस्थो गन्धवाहस्तु यक्षः कौवेरीस्थो रुद्र ईशानसंस्थः ।
ब्रह्मा प्राच्यां पश्चिमायामनन्तो यं सेवन्ते लोकपाला दशामी ॥११७॥

इति लोकपालाः ।

दक्षिणतो धरणेन्द्रो बहुफणभृत् कनकवर्णतनुरत्र ।
जिनभक्तं जननिवहं हृदयस्थितजिनवरस्त्ववति ॥ ११८ ॥
वामे पद्मावत्यथ कज्जलकालद्युतिस्त्रिफणकलिता ।
सर्पाभरणा कुर्कुटसर्पगतिस्त्रिभुवनं त्ववति ॥ ११९ ॥
क्षेत्राधिपतिर्मण्डलयानो व्यालोलकुन्तलकरालः ।
विहितभुजङ्गममालः पट्टपाणिः सेवतेऽत्र जिनम् ॥ १२० ॥
सितदीधितिसमवर्णे चामरजपमालिकावरफलाढ्ये ।
विमलालङ्कृतिवस्त्रे देव्यौ विजयाजये भवतः ॥ १२१ ॥
श्रीवामासुतभक्ते गजपतियाने करचतुष्कधरे ।
यन्त्रबहिःकोणगते एते दुरितालिमपहरतः ॥ १२२ ॥

अथ योजितकरकमलो मन्त्राधिपतिर्जिनाग्रतो ध्येयः ।
कमठो यन्त्रद्वारे कृतस्थितिर्द्वारपाल इव ॥ १२३ ॥
अरुणरुचिः शुचिमहीरुहहारिध्व विहितपीनकोपीनः ।
उच्छिखपावककीलापिङ्गलकुन्तलजटाजूटः ॥ १२४ ॥
उन्नतललाटपट्टप्रकटितभृकुटी कठोरक्तदृष्टे ! ।
विहितविकटाट्टहासत्रासितजगतीत्रितयसत्त्व ! ॥ १२५ ॥
तर्जितसघनघनाघनगर्जितहुंकारत्यवधिकराल ।
जिनपतिसकरुणवाचः श्रवणोत्पन्नासमदयासुलय ! ॥ १२६ ॥
जय कमठदुरितसन्ततिगजपतिभेनमृगपतितनूज ! ।
अहिपतिफणगणभूषण ! जिनवरचरणाम्बुरुहपुष्पलिह ! ॥ १२७ ॥

कलापकम् ।

विगतमदैर्यशनाघशतः सुगतिं विना वरचरणतपोभिः ।
सरसफला चमरकुलाविव शरणं कमठ ! जिनचरणौ ॥ १२८ ॥

इति कमठः ॥

मन्त्राधिराजसञ्ज्ञोविहितातिशयः सदाशयो जयति ।
श्रीपद्मदेवसूरिर्विख्यातो देवरिभूरिव ॥ १२९ ॥
प्रोद्यन्मार्तण्डबिम्बप्रतिमरुचिभरस्यास्य यन्त्रस्य विष्वक्
सर्वज्ञालोसुरेन्द्रासुरसुरयुवतीयक्षयक्षाङ्गनानाम् ।
सन्दोहैः सेवितस्य त्रिदशगिरिवनस्यावकाशो वनाली-
नीलाभा भाति भूयो विबुधजनकृतानन्दकन्दप्रभेदाः ॥१३०॥
इति मन्त्राधिराजयन्त्रोद्धारस्तृतीयः पटलः । ग्रं० २१२ ॥

## चतुर्थः पटलः ।

पूजाविधानमधुना सकलीकरणादिकं च सन्दर्श्य ।
कल्पेभ्यो विज्ञाय प्रवक्ष्यते निजहिताय मया ॥ १ ॥

भं १ गां २ इं ३ अं ४ दां ५ सं ६ आं ७ खं ८ लां ९ जं १०
वां ११ झ्वीं १२ क्षां १३ वों १४ वां १५ ॐ १६ स्युः

सकलीकृते कनिष्ठाद्यङ्गुलिपर्वस्त्रवतलौ च ॥ २ ॥
हरहुंहः सरसुंसः हरहुंहः पुनरथापि सरसुंसः ।
सकलीकरणं कुर्यात् पुरा चतुर्थं द्वितीयमपि ॥ ३ ॥
सत्त्वं रजस्तमो वाङ्गुलिपर्वसु चिन्तयेत् तृतीयं च ।
क्षिपॐ स्वाहा वेन्यं..........गस्त्वेव तुर्यं तु ॥ ४ ॥
भूमि–जल–वसनशुद्धिर्विधिवद् विदधीत बुद्धिमान् मन्त्रैः ।
आह्वाननादिमुद्रापञ्चकमत्र प्रकुर्याच्च ॥ ५ ॥

ॐ विमले! निर्मले! सर्व तीर्थजले अशुचिः शुचिर्भवामि लौं वौं झ्वौं स्वाहा ।

इति जलशुद्धिः ।

ॐ ह्रीं ज्वीं क्ष्वीं पां वां स्वाहा ।

इति वस्त्रशुद्धिः ।

इति मन्त्रान् त्रिरुच्चरन् भूमि–जल–वस्त्राणि चक्षुर्भ्यां पश्यन् हस्तेन स्पृशेत् ।

हृदयान्तः समं लात्वा ससमौ सम्मुखौ करौ ।
कृत्वोत्तानावधो नीत्वा मण्डले स्थापयेदिति ॥ ६ ॥

इति आह्वानमुद्रा ।

पराङ्मुखौ करौ कृत्वा हृदन्तांससमौ पुनः ।
उत्तानौ स्थापयेद्यत्र मुद्रा सा स्थापनेति च ॥ ७ ॥

इति स्थापनमुद्रा ।

युक्तमुष्टिद्वयं बद्ध्वा सूष्ठौ मध्ये विनिक्षिपेत् ।
यन्त्रस्य दर्शयेन्मूर्ध्वा सन्निरोधाख्ययेति च ॥ ८ ॥

इति सन्निरोधमुद्रा ।

हृदयान्तः स्कन्धसमौ सरलोर्ध्वांसकांगुली ।
करौ संयोजयेच्चेति मुद्रेयं सन्निधानिका ॥ ९ ॥

इति सन्निधानमुद्रा ।

संस्पृशन् मध्यमा पृष्ठमङ्गुष्ठाभ्यां तु तर्जनीम् ।
कृत्वोर्ध्वौ बाहुमुष्टी च नामयित्वा करौ ततः ॥ १० ॥
प्रत्येकं मण्डल अल्पे (?) कदयाय मथानयेत् ।
अवगुण्ठनमुद्रेति कार्या मन्त्रविचक्षणैः ॥ ११ ॥

इत्यवगुण्ठनमुद्रा ।

इति मुद्रापञ्चकम् ।

क्षिप ॐ स्वाहा हास्वा ॐ पक्षिरिति क्रमेण कृतरक्षः ।
अनुलोमं प्रतिलोमं पज्जानूदरमुखशिरस्सु ॥ १२ ॥

इत्यात्मरक्षा ।

ॐ ॐ ह्रां ह्रीं ह्रूं ह्रः पातालवासिने च घमलवरयूं ।
धरणेन्द्राय स्वाहेति मन्त्रतः शीर्षरक्षाकृत् ॥ १३ ॥

इति शीर्षरक्षा ॥

ॐ ॐ यः क्षौँ ह्रौँ फट् फट् गमलवरयूं च ।
श्रीपार्श्वाय स्वाहेति बाहुकुक्षिस्वलिङ्गकृतरक्षः ॥ १४ ॥

इति बाहूदररक्षा ।

ॐ ॐ स्वाहा कठ कठ कमलवरयूं जये ! विजये ! ।
नम इति मन्त्राद् हृदये कृतरक्षो मन्त्रविधिवेत्ता ॥ १५ ॥

इति कण्ठहृदयरक्षा ।

पणवपुव्वं य वामाएवि ! य नियपुत्तपरियरिय रमसजाणे ।
मण्डलमज्झे आगच्छ तिट्ठ तिट्ठ य स्वाहेति ॥ १६ ॥

ॐ वामाएवि ! सपुत्ति ! सपरिवारे ! सवाहणि ! मंडल मज्झे आगच्छ आगच्छ, अत्र स्थाने तिष्ठ तिष्ट स्वाहा ।

इत्याह्वानमन्त्राः ।

इत्याह्वानं कृत्वा विधाय मुद्रां जिनेन्द्रपार्श्वस्य ।
क्षुद्रोपद्रवरक्षाकृते जपेन्मन्त्रमिममेव ॥ १७ ॥

स्वसम्मुखौ करौ कृत्वा पाणावग्रथिताङ्गुली ।
चक्राङ्गुष्ठौ क्षिपेन्मध्ये पार्श्वमुद्रेति कीर्त्यते ॥ १८ ॥

ॐ उग्गे महाउग्गे उग्गे उग्गजसे पासे सुपासे पासमालिणि
ॐ ठः ठः ठः स्वाहा ।

अयं विघ्नोपशामको वार १०८ स्मरणीयः ।

यक्षाधिप–कमठ–जया–विजया–पद्मावतीप्रमुखमन्त्रैः ।
क्षेत्रपतेर्मन्त्रेण च स्मृतेन नश्यन्ति दुष्टाद्याः ॥ १९ ॥

मन्त्रा यथाक्रमम्–

ॐ म्ल्व्यूँ मुद्गरत्रिशूलमुद्रया म्रां म्रीं म्रूं म्रौं म्रः छिन्द्धि, छिन्द्धि भिन्द्धि भिन्द्धि, विहरि विहरि क्म्ल्व्यूँ त्रां त्रीं त्रूं त्रौं त्रः ताडय ताडय म्ल्व्यूँ प्रां प्रीं प्रूं प्रौं प्रः यूः यूं व्ह्रं व्ह्रं फट् ह्म्ल्व्यूँ ह्रां ह्रीं ह्रूं ह्रैं ह्रः हा हा हह कठोरमुद्रया ज्वल ज्वल, चालय चालय, प्रज्वल प्रज्वल,प्रज्वालय प्रज्वालय ॐ नमो भगवते पार्श्वयक्षाय चण्डकोपाय हूं क्ष स्तूं स्म्ल्व्यूँ स्रां स्रीं स्रूं स्रौं स्रः हा हा घे घे वज्रासित्रिशूलधारया इदं भूतं हन हन, दह दह, पच पच, त्रासय त्रासय, स्वः स्वः, खाहि खाहि, मन्त्राधिराज आज्ञा पयति हुं फट् स्वाहा ।

इति पार्श्वयक्षमन्त्रः ।

ॐ म्ल्व्यूँ र : र: रां रां ह्रा ह्रौं आं क्रौं ह्रौं ह्रीं व्ह्रँ द्रां द्रौं पार्श्वयक्षिणी ज्वल ज्वल, प्रज्वल प्रज्वल, हन हन, पच पच, इदं भूतं निर्घाटय निर्घाटय घूसान्धकारिणी ज्वलनशिखे ! हुं फट् फट् यः यः यः ॐ मात्री दूतिका सहिते ! पार्श्वयक्षिणी आज्ञापयति स्वाहा।

इति पार्श्वयक्षिणीमन्त्रः ।

ॐ ॐ ह्रां ह्रीं ह्रूँ ह्रः पातालवासिने म्ल्व्यूँ भ्रां भ्रीं भ्रूं भ्रौं भ्रः अनेकफणमण्डिताय धरणेन्द्राय हुं क्ल्ह्रँ हुं फट् स्वाहा ।

इति धरणेन्द्रमन्त्रः ।

ॐ ॐ क्म्ल्व्यूँ कठ कठ पञ्चाग्नितपःसाधकाय ठम्ल्व्यूँ द्रां द्रौं कमठाय ह्रौं फट् स्वाहा ।

इति कमठमन्त्रः ।

ॐ ॐ ऐं श्रीं जये विजये हर हर, सर सर, धम धम
हरय हरय, चूरय चूरय क्ष्म्ल्व्र्यूं ह्म्ल्व्र्यू स्म्ल्व्र्यूं र्म्ल्व्र्यूं उम्ल्व्र्यूं स्वा
इति जयाविजयामन्त्रः ।

ॐ ऐं क्लीं हस्क्लीं ह्सौं देवी पद्मावती नमः ।

इति पद्मावती मन्त्रः ।

ॐ आँ ह्सौं हस्क्लीं ह्रौं क्षेत्रपाल इदं स्थानं आगच्छ
आगच्छ मम चिन्तितं कार्यं कथय कथय हुं वषट् ।

अथवा–

ऐं ह्रीं क्षां क्षीं क्षूं क्षों क्षौं क्षः क्ष्म्ल्व्र्यूं मण्डलक्षेत्रपाल
नमः । इति क्षेत्रपालमन्त्रः ।

एते मन्त्राः पूजासमये स्मरणीयाः ।

इति मण्डलमन्त्रोद्धारः ।

---

वक्ष्ये विशेषमधुना ध्यानविधानस्य पार्श्वनाथस्य ।
यस्मात् साधकवर्गे त्रैकाल्यं ज्ञानमाविः स्यात् ॥ २२ ॥
क्षारम्भोनिधिमध्ये जम्बूद्वीपाभिधोऽस्ति सद्द्वीपः ।
सुरयोजनलक्षपृथुः पृथ्वीधरतरुनदीभिरभिनीलः ॥ २३ ॥
अन्तर्नाडीनिर्गतजिनवरमौलौ विकस्वरं चिन्त्यम् ।
तदुपरि गैरिककमलं जलधिरस (६४) भ्राजमानदलम् ॥२४॥
इदमुपरि कोमलतरा गन्दिका ततश्चिन्त्या ।
पूर्वोक्तरूपमहिमा तत्रासीनो जिनो ध्येयः ॥ २५ ॥

श्रीपार्श्वनाथवामे श्वेताभरणां स्वकानि बिभ्राणा ।
भुजपट्कं नेत्रत्रयमन्तो घरवरशरीररुचि ॥ २६ ॥

पद्मावतीह देवी ध्यायन्ती तीर्थराजपदकमले ।
ध्यातव्या निजहृदये साधकवर्गेण सन्तुष्टा ॥ २७ ॥ युग्मम् ॥

सितवाससी वसाने श्वेताभरणे च चामराढ्यकरे ।
विजयाजये च देव्यौ पक्षद्वितये ततश्चिन्त्ये ॥ २८ ॥

षोडशदलेषु षोडश विद्यादेव्यः स्थितास्तु परितोऽस्य ।
यक्षाः शासनदेव्यो नव ग्रहा लोकपालाश्च ॥ २९ ॥

एते चिन्त्याश्चेतसि धरणेन्द्रः फणसहस्रतः छत्रम् ।
बिभ्राणो जिनशिरसि स्फुटभक्तिव्यक्तिकश्चिन्त्यः ॥ ३० ॥

अब्धिरसौ(६४) गीर्वाणाः कुर्वाणाः पञ्चवर्णसुमवृष्टिम् ।
गजपतिकरधृतकलशैर्ध्येयं च जिनेन्द्रमभिषिञ्चन् ॥ ३१ ॥

परितः स्थितोऽस्य वप्रो रत्नमयस्फुरितकिरणकपिशीर्षैः ।
वज्रमयं तदुपरिगतमाच्छादनमत्र चिन्त्यं तु ॥ ३२ ॥

देदीप्यमानमूर्तिर्जिनवचनमनार्तिमाननुध्यायन् ।
करधृतवेत्रलतोऽयं कुर्वाणो द्वारपालत्वम् ॥ ३३ ॥

कमठः शठतारहितो ध्यातव्यो दुरिततिमिरदिनभर्ता ।
कुमतक्षितिजकुठारो दर्शनपङ्केरुहैकपुष्पलिहः ॥ ३४ ॥

युग्मम् ।

वप्रबहिस्तात् परिखा स्मर्तव्या खादिराङ्गारभृता ।
साधक एकाग्रमना ध्यानविधानं करोतीत्थम् ॥ ३५ ॥

इति विशेषध्यानम् ।

दक्षिणेतरभुजान्तरमध्यान्निःसरन्नथ सरीसर्पराजः ।
उज्जभेण सकलानपि वर्णानाश्लिषन्निजजनानिव बन्धुः ॥३६॥
स्वर्णसोदरसहस्रफणाभिशतपत्रमंडलं तु दधानः ।
योगिभिर्जिनवरस्मृतिकाले सन्ततं मनसि संस्मरणीयः ॥३७॥

इति ध्यानम् । युग्मम् ।

अथ भणामि फणाङ्कजिनार्चनं न जपहोमविधौ विवधतः ।
फलति मन्त्र विहमतुं रात् (?) जलदवारिभरादिव पादपः ॥ १ ॥
जय जिनेति वचः प्रथमं भणन् घुसणचन्दनतः कृतकङ्कणः ।
अगुरुधूपधूपितशुद्धरुक् सिचयसञ्चितदेहरुचिर्भृशम् ॥ २ ॥
त्रिंशांसकुसुमाञ्जलिपूर्वकं विलसीदलमम्बरपूरितैः ।
कनकमृत्कलधौतमयैर्विभुं स्नपयति प्रमदः कलसैरसौ ॥ ३ ॥
मृगमदागुरुचन्दनकुङ्कुमैर्मलयजैर्घनसारविमिश्रितैः ।
जिनवपुः परिलिप्य प्रपूजयेत् बकुलचम्पकमुख्यसुमैः शुभैः ॥ ४ ॥
घृतविपक्त्रिममोदकसंयुतं सघृतमामिषमस्य च ढौकयेत् ।
विमलतन्दुलमङ्गलसत्फलावलिदलप्रददः कृतदीपकः ॥ ५ ॥
प्रणवपूर्वपदैस्तु नमोऽन्तगैरपि तुरीयविभक्तिगनामभिः ।
...कलमण्डलमर्चयति स्फुटं फलदलैः कुसुमैरसमैस्ततः ॥ ६ ॥

जय जयेति वदद्वदनाम्बरो जिनपदावभिनम्य सिताम्बरः ।
रजतहेममृदां वरकर्णिकामयमथो कुरु मङ्गलदीपकम् ॥ ७ ॥
धरणतदयिताविजयाजयाकमठपार्श्वनवग्रहसंयुतम् ।
सुरपवह्निकृतान्तपलादिनां वरुणवायुकुबेरपिनाकिनाम् ॥ ८ ॥
अजनरायणयोरपि नामभिः प्रणवपूर्वनमोऽन्तगतैरपि ।
समभिपूजयति स्फुटभक्तियुक् कुसुमधूपफलप्रमुखैः क्रमात् ॥ ९ ॥
गुदग–नाभिग–हृद्गत–कण्ठगा–ऽऽस्यग–ललाटगवक्त्रचयादिवित्
श्वसनपञ्चकचारविचारणाकृदचवुद्धसमस्तसुतत्त्वकः ॥ १० ॥
रहसि शीतमयूखमुपागते मरुति चारि कुमण्डलगे सति ।
कृतसमत्वरसो घनपावनः सुरपदिग्वदनो मदनोज्झितः ॥ ११ ॥
निजकरा वदित (?) सुधराभवावनिरुहप्रभवं सुदलावलि ।
अशिथिलं विशदप्रभयान्वितं परिमलप्रसरं तु सुदन्तकम् ॥ १२ ॥
परिहृताखिललोककथाप्रथः कुसुममेकमथैकमुदारधीः ।
अचलनिश्चलचित्तशरीरकं पवनयुक् प्रविधाय हृदग्रगम् ॥१३॥
स्थिरतरीकृतनेत्रकनीनिको हृतसमस्तखवारमनोहरः ।
जिनपतिं परिवारयुतं स्मरन् वचनो मरुता सह साहसी ॥ १४ ॥
जिनपतिक्रमयुग्मतले क्षिपन् रविसहस्रसुमानि पुमानिति ।
त्रितयमन्त्रजपप्रवराणि वै जपविधिर्गदितः सकलस्त्वसौ ॥ १५ ॥
कुलकम् ।

जापान्ते नित्यपूजान्ते स्तवान्ते चैत्यवन्दनाम् ।
विदध्याद् बुद्धिमान् शुद्धां वामेयस्याग्रतो व्रती ॥ १६ ॥

मलयसम्भवशालिकतन्दुलोत्तमसिताघनसारविमिश्रितान् ।
जपितपुष्पचयीदशमांशतः सुरभिदुग्धवृतेन तु चूर्णितान् ॥१७॥
चनकमानगुटीः प्रकटार्चिषि रविशतप्रमिता ज्वलने कृताः ।
रसशशाङ्कमिताङ्गुलपिप्पलज्ञरुसमिद्भिरथै महिपाभत्तत: (?) ॥१८॥
दिवसते कमुते तृतयं यकः स्थिरमना अपि विघ्नशतार्दितः ।
निरशनैरहसि स्थितवान् मुनि र्धतयुताशयतः प्रतिहोमयेत् ॥१९॥

कुलकम् ।

जिनपतिक्रमयुग्ममधुव्रतः सपदि वै कमठः शठतोज्झितः ।
प्रकटमूर्तिरमुष्य सुधासुजां द्रम इवालिमतानि ददात्यहो ॥ २० ॥
जिनपति....न जनं स्फुरच्छमदयं मदयन्त मुदारभम् ।
गतमतिर्बत नन्तुमहं तु सच्छमदयं मदयन्तमुदारभम् ॥ २१ ॥
बहुजनातपनस्त....पः पुनः शतकरो त रोति कलङ्कयुक् ।
जिनवरो....नववर्ण्यता मुपमया....न मया कया ॥ २२ ॥
जिन भवेद् भवते भवते ह वै न समता समता समता कृता ।
असुमते सुमतेर्निचयं तता वितरता तरता भवसागरम् ॥ २३ ॥
किमधुना मधुना मधुनान्त सुर–सुरवृतैरमृतैरपि तैः किमु ? ।
जिनपतिं न पतिं न दधे लये त्रिजगती जगती तरशं किमु ?॥२४॥
जिनमते न मते भविनां मनः परमते रमते भवसङ्गते ।
जिनमतोद्यतभावनया विना विमदनं मदनं दम–त्वह ॥ २५ ॥
परममिच्छसि सद्प्रतिभेदनेऽवनमितं भजतं वशमाचले ॥
सकलभं कलभञ्जितमोहभं सकलभं कलभं जितमोहभम् ॥ २६ ॥

विन्दुसञ्चारकम् ।

दमी महानन्द....नाश्रितो ददाति देवः पदमच्युतमम् ।
वीरोऽथ हन्ता विदलं भवव्रजदवानलध्वंसदवारिवाहकः ॥ २७ ॥

चक्रम् ।

तमानन्दकरं शान्तोद्धततोपगतागमम् ।
नमत्यविपदं भ्राजन्मोहारिसमरं न कः ? ॥ २८ ॥

परिधिश्लोकः ।

मार्तण्डबिम्बवत् कान्तिः सिचये यद्यपुर्नवा ।
वारिदा सुरविप्लाविऽप्यौज्झतो यन्मनः क्षमा ॥ २९ ॥
मायान्ते चक्रिवान् योऽपि यं तत्याज न चिद्रमा ।
मारबाणसुजेतारं तं जिनं नौमि सुस्थितम् ॥ ३० ॥

युग्मम् । खड्गबन्धः ।

व्यञ्जितानेकलोकस्य जितानन्तरुचेर्गुणान् ।
तानङ्ग ! वक्तुमाशास्ते नेतर्वर्यकलोऽपि कः ॥ ३१ ॥
रमासारचिदा रम्यतारसंसारसागर ! ।
गम्भीरसुन्दर श्रव्यरवान्तरतमो रवेः ॥ ३२ ॥ युग्मम् ।

कमलबन्धः ।

दीव्यद्देवेन्द्रवृन्दोघदादवन्द्यं दिवोददम् ।
देवदेवं विदं वन्देऽन्घवादेधदावदम् ॥ ३३ ॥

द्व्यक्षरः ।

सर्वासुरसुरैः सेव्यो विश्वविश्वेश्वरः श्रिये ।
आश्रयः श्रेयसां सारः शिवसौख्याश्रयो वशी ॥ ३४ ॥

पञ्चवर्गपरिहारः ।

मन्त्रक्रमान्तरगतं किल साध्यनाम
यत्रापि सम्पुटमिदं वशहेतवे स्यात् ।
साध्याभिधान्तरगतोऽपि च यत्र मन्त्रो
रोधं तमाहुररिसंहतिवन्धनाय ॥ ८ ॥

मन्त्रक्रमग्रथितमत्र च साध्यनाम्नै-
कैकाक्षरं ग्रथनकं त्विति लाभपुष्ट्यै ।
व्यस्ताभिधाक्षरगतं तु विदर्भणाख्यं
स्तम्भोऽत्र शत्रुनिवहस्य वदन्ति विज्ञाः ॥ ९ ॥

| | | |
|---|---|---|
| देवदत्त ॐ | इति दीपनम् । | १ |
| ॐ देवदत्त | इति पल्लवः । | २ |
| ॐ देवदत्त ॐ | इति सम्पुटः । | ३ |
| देव ॐ दत्त | इति रोधः । | ४ |
| ॐ देॐव ॐदॐत्त | इति ग्रथनम् । | ५ |
| ॐत्तॐदॐवॐदे | इति विदर्भणम् । | ६ |

इति दीपनादियोगषट्कम् ।

दण्डासनं$_1$ स्वस्तिक$_2$ पङ्कजे$_3$ च
स्यात् कुक्कुटं$_4$ वज्र$_5$ युतं च भद्रम्$_6$ ।
आकर्षणे$_1$ वश्य$_2$ वधे च$_3$ पुष्ट्य$_4$
शान्त्यै$_5$ तथा द्वेषकृते$_6$ वदन्ति ॥१०॥ इत्यासनानि ।
आकृष्टि–वश्ये–वधे–रोधे–विबोधे–शान्ति–
विद्वेषणेषुँ सृणिरम्बुज–वज्र–शङ्खाः ।

बोध-प्रवाल सहिताः पडमूर्हि मुद्रा
विद्रावणाय दुरितस्य सदा विदध्यात् ॥ ११ ॥
बद्ध्वा वामभुजस्य तु मुष्टिं बद्ध्वा तु तर्जनीचक्रम् ।
सन्दर्शयेदमुष्य तु मुद्राऽसावङ्कुशाख्येति ॥ १२ ॥
यन्मणिबन्धे पाणी सरल-प्रसृताङ्गुली बतोर्ध्वमुखौ ।
कुर्याद् यन्त्रस्याग्रे विधिविज्ञः कमलमुद्रेति ॥ १३ ॥
दक्षिणभुजेन वामा वामभुजेनापि दक्षिणा युगपत् ।
प्रसृताङ्गलिना ग्राह्या कलाचिका वज्रमुद्रेति ॥ १४ ॥
क्षिप्त्वाङ्गुष्ठौ मध्ये मीलितसरलाङ्गुलीत्रयो यत्र ।
चकितर्जनिकावथ भुजौ विदध्यात् तु शङ्खमुद्रा सा ॥१५॥
चक्रेकनिष्ठानामा न्यस्ताङ्गुष्ठाग्रयोर्यदिह भुजयोः ।
सरलचले तर्जनिकामध्यमिके स्तः प्रवालमुद्रेति ॥ १६ ॥
तिस्रोऽङ्गुलीस्तु सरलास्तर्जन्यङ्गुष्ठकौ च सम्मिलितौ ।
कुर्याद् यत्र प्रवचनबोधाख्या ज्ञानमुद्रा सा ॥ १७ ॥
इति मुद्राः ।
दृषत् [illegible] ।
मोक्षेऽ [illegible] येद्धि ॥१८॥
इति स्रजः ।
स्तम्भद्वेषाकर्षणपोषणशान्त्यादिवश्यमृतिकर्म ।
पूर्वादिकदिग्वदनः सुधीर्विदध्यात सदा सर्वम् ॥ १९ ॥
इति दिशः ।
उच्चाटनद्वेषणमारणानि चण्डयुतौ वायुरवतैजसस्थे ।
शान्तिं च पुष्टिं वशतां विबोधं चन्द्रे जलोर्वीप्रवहे विदध्यात् ॥२०॥
इति नाडि ।

काकोलूककपोतकङ्कतगरप्रेतालयास्थ्यंशुक-
क्षाराङ्गारकपालवालमहिषोष्ट्रश्वोत्थवालेयजाः ।
दन्तास्थ्य मृजचर्मकेशनिचया भद्रा च रिक्ता तिथि-
र्मन्देशार्कयमाग्निभं च मृतिकृत् योगादिरुच्चाटने ॥२१॥

मध्यापराण्हास्तमयं हराग्निरक्षोयमाशा हरितालराज्यः ।
निम्बार्कपत्राणि च धूंसकेशनिर्माल्यधूलीतिलतैलमाषाः ॥२२॥

मषी च धत्तूरकपुष्पभूतद्रुशाल्मलीपिप्पलकीलकाद्याः ।
एतानि बीजानि बुधा भणन्ति विद्वेषणोच्चाटनमारणेषु ॥२३॥

कर्पूरचन्दनसुकुङ्कमगन्धधूली प्रातर्निशार्धर विपुष्यभमूलयोगात् ।
श्वेतांशुकं दधिमधुप्रभृति प्रकामं शान्त्यादि कर्मणि करोति-
बुधोऽथ सिद्ध्यै ॥ २४॥ इति द्रव्यसमुदायः ।

विद्वेषणाकर्षणचालनेषु ह्रीं वौषडन्तं फडिति प्रयोज्यम् ।
वश्ये वषट् वैरिवधे च घे घे स्वाहा स्वधा शान्तिकपौष्टिकेषु॥२५॥

इति रञ्जिकाः ।

उदयार्करक्तशशधरधूमहरिद्रासिता वर्णाः ।
आकृष्टिवश्यशान्तिकविद्वेषणरोधवधसमये ॥ २६ ॥

मोहोषातरणिः प्रभाद्रुसरणिश्चिन्तामणिः प्राणिनां
चिन्तातीतफलप्रदानकुशलः कल्पद्रुदावानलः ।
मानस्फूर्तिहरः सरीसृपवरप्रोद्यत्फणाडम्बरः
पायात् पार्श्वजिनः समस्तभविनः पापेभपञ्चाननः ॥२७॥

कर्मषट्कम्—

षट कर्माण्यहमधुना विधिना वक्ष्ये परार्थबोधाय ।
मन्त्राधिराजसत्कान्यवबुध्य च विमलकल्पेभ्यः ॥२८॥

प्रातः पवित्रवसनो दीपनयोगेन पङ्कजासनकृत् ।
पूर्वाभिमुखः शुक्लध्यानयुतो बोधसंयुक्तः ॥२९॥

हिमरुचिमञ्जनसङ्गतहंसो विस्फूर्जदग्निजलतत्त्वे ।
शरदि प्रसन्नवदनो ह्यङ्गुष्ठेन प्रचालयेन्मालाम् ॥३०॥
कुङ्कुमचन्दनचन्द्रैः सुवर्णकुशलेखिनीभिरभिलिख्य ।
यन्त्रं पवित्रपात्रेऽष्टरवेन्दु[१०८] कुसुमैः सितैर्जप्तम् । ॥३१॥
पूर्वोक्तं योऽर्चयति च नित्यं शान्तिं करोति वामेयः ।
तस्य गृहे दुरितालो शाम्यति शरदीव घनमाला ॥ ३२ ॥
शमयति दुरितश्रेणिं दमयत्यरिसन्ततिं सततमसौ ।
पुष्णाति भाग्यनिचयं मुष्णाति व्याधिसम्बाधाम् ॥३३॥

शान्तिकयन्त्रम् ।

ह्रामलके ए स्कन्धे हा स्कन्धे फुं भुजे तु कुक्षावों ।
हूं कटीतटगतः टो जानुनि वामपादे ऊँ ॥३४॥
क्षों नाभौ स्वा लिङ्गे ए पादे दक्षिणे यः फुः ।
जानुनि ह्रीं कटि कः कुक्षौ ह्रीं टः करयुगे योज्यैः ॥३५॥
ह्रीं शिरसि यन्त्रमिदं प्रवालमुद्रोऽथ कुक्कुटासनकृत् ।
वायव्यकोणवदनो मध्यान्हे हुं त्विति प्रयुञ्जानः ॥३६॥
प्रावृट्काले श्वसने तिग्मद्युतिनाडिकां समाश्रयति ।
निश्चलचेताः पवनगतत्त्वेऽसौ तर्जनीजापः ॥३७॥
घनसारघुसृणघूसकसुगन्धधूलीभिरेभिरभिलिख्य ।
कनकतरोर्लेखिन्या पात्रे जातीसुमैर्मपीमिश्रैः ॥३८॥

अष्टखविधुप्रमाणैर्जपति नरो योऽनिशं विशङ्कः सन् ।
तदरिकुलं विद्वेषं मिथः प्रयातीह वामेयात् ॥३९॥

नार्या नरेण सार्कं नार्या सार्धं नरस्य विद्वेषम् ।
कुरुते कृष्णाशयतो ध्यातो वामासुतः सततम् ॥४०॥

शत्रूयति मित्रततिः सर्पति जनकः सपत्नति सवित्री ।
दस्यूयति दयितापि हि साधकशत्रोर्जिनप्रभावाच्च ॥४१॥

इति विद्वेषयन्त्रं द्वितीयम् ॥२॥

भाले ह्रीमैं स्कन्धे ए स्कन्धे टो भुजे च कुक्षावोम् ।
ह्रः कटिगो जानुनि फुः पादे ॐ नाभिगो ह्रीं वः ॥४२॥

टो लिङ्गे चरणे ह्रां ह्रः कट्यां जानुनि स्वा तथैव ।
माया कुक्षौ हस्ते हा कुचयोर्यस्तथा हि फुः शिरसि ॥४३॥

सम्पुटयोगविधायी सरोजमुद्राविचक्षणो मन्त्री ।
रक्ताशयो वषट्कृत् पूर्वाभिमुखस्त्विदं यन्त्रम् ॥४४॥

उदयति हिमरुचि विलसति सलिलधरामण्डले ह्यनामिकया ।
जपमालां संवास्य प्रफुल्लहृदयश्च साधको ध्यायन् ॥४५॥

कर्पूरगन्धधूलीकुङ्कुमगोरोचनादिभिर्विमलगन्धैः ।
अभिलिख्य भूर्यपत्रे रक्तैः कुसुमैर्वसुखचन्द्रमितैः ॥ ४६ ॥

पूर्वाह्णे पूजयति च रक्ताशययुक् जिनेश्वरं भक्त्या ।
तस्यावश्यं वश्यं प्रयात्यरं विष्टपत्रितयम् ॥४७॥

नरनरपतियुवतिततिदुर्जनधीधनजिघांसुजनतापि ।
अपदद्विपदचतुःपदमुख्यं सर्वं हि वश्यं स्यात् ॥४८॥

इति वश्ययन्त्रं तृतीयम् ॥३॥

भाले ॐ स्कन्धे ॐ अंसे ए स्वान्तरो च यो भुवनगः फुः ।
कुक्षौ टो जानुनि हु: पादे नाभिगोऽस्य भवति क्षः ॥४९॥

ह्रीं लिङ्गे पादयोर्यो ह्रूं जानुनि कुक्षिगो भवेद् द्विहः ।
मायाभुजान्तरे ह्रीं हा कुचयोर्विद्धि ऐं शिरसि ॥ ५० ॥

साधकयोगे निपुणो हरिहरिदुरिक्षतरुद्रनयनयुगः ।
अपरार्धे वज्रासनविहितास्थः शङ्खमुद्रया कलितः ॥५१॥

चण्डघुतावुदयति ज्वलने तत्त्वे समुद्यते नितराम् ।
मध्यमया कृतजापः साध्यं पीतप्रभं पश्यन् ॥५२॥

पीतप्रभमवनीतलमभितः पश्यन् हरिद्रया युतया ।
कुङ्कमगोरोचनया लिखितं विजपंथ हुंशब्दम् । ॥५३॥

पीतैः कुसुमैरष्टखखेन्दुमितैरर्चयत्यनिशम् ।
यन्त्रमिदं यो योगी तस्यारीन् स्तम्भयेत् स जिनः ॥५४॥

कालसर्पसूपरसनाप्रायान् दधतो हि सांध करवालान् ।
स्तम्भयति स्तम्भनकावतारपूर्जिनपतिस्तस्य ॥५५॥

गर्भव्याधिविबाधादुर्जनवादीन्द्रचोरदहनानाम् ।
निजपरचक्रजलाहिप्रभृतीनां स्तम्भनं कुरुते ॥५६॥

इति स्तम्भनयन्त्रं चतुर्थम् ॥४॥

ॐ भाले स्कन्धे ह्रींमंसे हृत्पाणिगो भवेत् प्रणवः ।
कक्षायां फुः कुक्षौ फुर्जानुनि ह्रीं पदे हि स्वा ॥५७॥
ह्रां नाभौ लिङ्गे ह्रीं या पादे ह्रूँ भवेत्तथा........।
जानुनि टः कुक्षौ फुः कक्षां (?) भुजेह्रीं कुचे एऐ ॥५८॥
यः शिरसि
याम्यादिग्वदनोऽयं दण्डासनसंस्थितो हि वौषट्कृत ।
अङ्कुशमुद्रासहितोऽभ्युदितादित्यौजसं जिनं ध्यायन् ॥५९॥
हेमन्ते हिमकिरणे समुद्यते वायुमेदिनीतत्त्वे ।
पूरकवातविधाता कनिष्ठयाक्षत्तजं गमयन् ॥६०॥
अरुणोदयवेलायामिदं लिखित्वा तु भूर्यपत्रादौ ।
घुसृणघनसारचन्दनगोपित्तैर्यो हि पूजयति ॥६१॥
आयान्ति सम्पदस्तं नदीनमिव दूरतः सदा नद्यः ।
त्यजति नरं न हि सिद्धिर्वशीकृता मत्तनेत्रेव ॥६२॥
कनकगिराविव कनकं मणिरिव जलधौ निधाविव धनं च ।
रत्नमिव रोहणगिरौ तस्य गृहे चाक्षयं भवति ॥६३॥
इति लाभयन्त्रं पञ्चमम् ॥५॥
ह्रामलके ह्रींमंसे ह्रींमास्ये भुजान्तरे हि ह्रः फुः ।
फुः कटचाया जानुनि ह्रां पादे नाभियोगो हि ॥६४॥
ऐं लिङ्गे टः पादे हा जानुनि ह्रीं भवेत् कटीतटगः ।
कक्षायां क्षः करगः फुः कुचगावस्य चोंकारौ ॥६५॥
फट् शिरसि ।

कज्जलमलिनं भुवनं घनाघनश्यामलं जिनं पश्यन् ।
ज्वलनदिशि विहितवदनः सायं वज्रासनाश्रितो मन्त्री ॥६६॥
शिशिरे सवितरि वहति ज्वलनं तत्त्वं च कुम्भकविधायी ।
मध्यमया रिं नागैर्जपयुक्............सं नमति ॥६७॥
योगविद्भणवेत्ता यन्त्रमिदं मृतककर्पटे लिखति ।
कुङ्कुमकोकिलरक्तैर्हरिद्रया मिश्रितैस्तु शितिकुसुमै ॥६८॥
पूजयति पार्श्वनाथं प्रसादतस्तस्य सुम....दरिनिवहः ।
क्षयति क्षुयति शीयति निवकुलब्ध्वा (?) । ॥६९॥
अभिजातिजातिरस्य क्षयति हि कमलेव हीनपुण्यस्य ।
रोगैर्द्रव्यविनाशैरशुभैर्दुरितैश्च नृपरिपुभिः ॥७०॥

इति मारणयन्त्रं षष्ठम् ॥६॥

भाले क्ष्मीं (क्ष्मीं) ऐं स्कन्धयोः फुः करेऽन्तरे फुः स्वा ।
कट्यां ना तुंर्यो ह्रीं पदे ह्रीं प नाभिगस्तस्व ॥७१॥
लिङ्गे पदगो ह्रूँमीं जानुनि हा करान्तरे टो हि ।
टः पाणावथ कुचयोर्यः क्षः शिरसि स्थिता माया ॥७२॥
इत्थं शशधरसदृशो भुवनजितो बोधमुद्रगा पश्यन् ।
...............नो घनसारैर्यन्त्रमभिलिख्य ॥७३॥
जातीकुसुमैरर्हति शश्वत्स्फटिकाक्षमालया जपति ।
एकाग्रमानसान्तर्निश इति घटिकाचतुष्टये मन्त्री ॥७४॥
स कविर्देवज्ञोऽपि हि वादीन्द्रो मन्त्रतन्त्रनिपुणश्च ।...
सर्वकलाकुलसदनं भवति नरोऽवश्यमेवात्र ॥७५॥

इति ज्ञानयन्त्रं सप्तमम् ॥७॥

ह्रीमलके ॐ स्कन्धे ज्जामङ्घ्री भुजान्तरे हि व्लूँ टेः ।
कट्यां जानुनि ह्रीं पादे फुः नाभिगो भवेद् द्विहः ॥७६॥
टो लिङ्गे त्वा पासा हा जानुनि वः कटीतटगतोऽपि ।
एंऐ कक्षाकरगौ क्षः फुः कुचयोः शिरसि च प्रणवः ॥७७॥

इत्थं ग्रथनाभिज्ञः स्वस्तिकसंस्थश्च शङ्खमुद्राकृत् ।
पीतध्यानविधिज्ञः शब्दं फडिति प्रयुञ्जानः ॥७८॥
यन्त्रमभिलिख्य कुङ्कुमकोकिलरक्तैर्हरिद्रया युक्तैः ।
अष्टखखचन्द्रकुसुमैः कृष्णैरर्चयति.... मध्यान्हे ॥७९॥

ग्रामं नगरं जनपदमरातिमवनीपतिं युवतिजातम् ।
क्षोभयति पार्श्वनाथः सन्ततमित्याग्रहव्यातः ॥८०॥

इति क्षोभयन्त्रं सप्तमम् ।

दिक्कालमुद्रासनवस्तुवर्णप्रभञ्जनादीनथ योगपट्टम् ।
क
विज्ञाय कल्पाद्रजतादिपट्टे संलिख्य कर्माणि बुधो विदध्यात् ॥८१॥

अथ प्रस्तावाद् ध्यानविशेषं वच्मि–

जानुयुग्ममतिहेमसमानं रोहिणीरमणभं त्वसिनानि ।
कण्ठमानवदिवाकरकान्तिं कद्रुलानमभिलोलिसरोजम् ॥८२॥
वैनतेयमिव पार्श्वजिनेशं व्याधिविघ्नतिमिरौघदिनेशम् ।
जङ्गमास्थिरगरोत्करनाशमेनमस्मरत हर्षविकाशम् ॥८३॥

उक्तं च–

युक्तं कमलपद्माभ्यां धरणेन्द्रेणेह पद्मया ।
जयाविजयादेवीभ्यां सप्तफणाङ्करस्तुधम् ॥८४॥

श्वेतं पार्श्वं जिनास्याद्य निर्गत्य प्रविशन्ह्रियम् ।
मुखे ध्यायति यस्तस्य शान्तिपुष्टयः ॥८५॥
युग्मम् ॥

ध्यानवर्णमिवं फणैररुणाभिः सुधां क्षरन् ।
पार्श्वः स्वार्चयिरारास्येर्ध्यातः सम्मोहवश्यकृत् ॥८६॥

अप्यष्टकरिफणाभिर्हन्तमभृतं जिनम् ।
स्वाङ्गे ध्यायति यस्तस्य दिव्यस्तम्भो भवेदिह ॥८७॥

अप्युष्टकोटिफणाभिर्विषाद्यैः करकैर्जिनः ।
वर्षन्निगडबन्धं पुष्पैर्यस्तद्भङ्गहेतवे ॥८८॥

नवलक्षफणाग्रैस्तु श्यामैः पार्श्वो विषं क्षरन् ।
ध्येयः शत्रुशरीरस्थं दोषोच्चाटनमारिकृत् ॥८९॥

ध्यातव्यः प्रविशच्छद्भिर्नवलक्षफणाग्रतः ।
विषं वर्षन् जिनश्चौरभूतायास्तेषु बन्धकृत् ॥९०॥
इति ध्यानविशेषः ।

उत्तप्तकनकमरकतविद्रुमघनचन्द्रबिम्बसङ्काशाम् ।
समायमोसायत्तेभ्या घह्रातपत्रं प्रभोरुपरि ॥९१॥

तद्वितयान्निजदेहे छत्रितमतितोऽपि सन्ततं ध्यायेत् ।
यः पार्श्वनाथजिनवरपदपङ्कजमधुकरो हि नरः ॥९२॥

सर्पविषा डाकिन्यः सद्‌स्यवो हरितनो रुजः सिंहाः ।
अरयः किरयो भूमीपतयो रक्षोऽधिपतयश्च ॥९३॥

भूतप्रेतपिशाचग्रहमुद्गलखेचराः सवैतालाः
फणिनो दुर्जननिवहास्तमभिद्रोतुं न शक्ताश्च ॥९४॥

इति प्रभावः ।

यच्चेतः शंशान्तं करणगणो येन चाथ दंदान्तः ।
तन्तान्तं पुण्यमितो चंचान्तं तेन सिद्धिसुखम् ॥९५॥

मन्त्राधिराजजिनपतिचरणाम्बुजसेवनात् सततमेव ।
ज्वरवातसन्निपातश्लेष्माद्याः शामयन्ति गदाः ॥९६॥

शाकिन्यो यक्षिण्यः कुष्माण्डिन्यो जलादिवासिन्यः ।
वनवासिन्योऽथ नभोगामिन्योऽरण्यचारिण्यः ॥९७॥

रेवत्यः क्षेत्रभवाः ग्रामभवाः शैलकोद्भवाश्चापि ।
जप्ताक्षतकणनिकराज् झटिति विमुञ्चन्ति देवताः पात्रम् ॥९८॥

युग्मम् ।

नित्यध्यानविधानाद् विधिना सिद्ध्यन्ति सिद्धयोऽष्टौ हि ।
दहनसमीरणसलिलस्तम्भनमपि चिन्तितः कुरुते ॥ ९९ ॥

दौर्भाग्योपहतानां सौभाग्यं रोगिणां तथाऽऽरोग्यम् ।
सन्ततिमपपुत्राणां मृतवत्सानां सजीवसन्ततिताम् ॥१००॥

विजयार्थिनां तु विजयं धनार्थिनामिह महद् विभवम् ।
जायार्थिनां तु जायां नियोगिनां विज्ञपतिनि योगम् ॥१०१॥

निजदेशभ्रष्टानां भूमिपतीनां च भूमिलाभं च ।
विद्यार्थिनां तु विद्यां बहुपुत्रान् पुत्रकाम्यानाम् ॥१०२॥

अपदद्विपदचतुःपदजनपदवशतां वशार्थिनां सततम् ।
अभिजातिजने निधनं स्तम्भनमथ मोहनं सुमहत् ॥१०३॥
ऋद्धिं बुद्धिं सिद्धिं मतिं गतिं संस्मृतिं जने प्रीतिम् ।
कीर्तिं स्फूर्तिमनार्तिं दत्ते वामासुतो ध्यातः ॥१०४॥ कुलकम्।

इतिभाववर्णनम् ।

मन्त्राधिराज ! जिनराज ! तव प्रसादा--
दासादयन्ति यदिहाभिमतानि भव्याः ।
चित्रं किमत्र सुरमानवसर्पनाथ--
सम्प्रार्थितं निजपदं हि यतो ददाति ॥ ॥१०५॥

वामेय ! वाक्पतिमतिप्रकरोर्जितोऽपि
को वक्तुमत्रभवतोऽतिशयान् प्रगल्भः ।
यस्य प्रसादलवतोऽप्यचिरात् प्रसूते
वन्ध्या तनूजमपि पश्यति नेत्रहीनः ॥१०६॥

देवाधिदेवाङ्घ्रिसरोजसेवाहेवाकमेवाकलयामि तेऽहम् ।
तदस्मि हंसः सुगतिप्रशंसोऽसत्सज्जलक्षीरविवेकमिच्छुः ॥१०७॥

त्वद्ध्यानसन्धानसुधानिपानपानान्न दीनाऽऽननतां भजन्ते ।
कीनाशसेनां सगदां विजित्य मृत्युञ्जितो यान्ति शिवालयं ते ॥१०८॥

सौभाग्यमारोग्यमवन्ध्यभाग्यं श्रीकीर्तिविस्फूर्तिमनार्तिमन्तः ।
अत्रापि मन्त्रस्मरणाल्लभन्ते सद्यः समुद्यद्वरभक्तिभाजः ॥१०९॥

त्वदङ्गसङ्गद्युतियामुनाम्भः स्नानेऽपि गङ्गाजलवद् विशुद्धाः ।
चकासति त्वां समुपासते ये प्रभो ! प्रभूणां महिमा महीयान् ॥११०॥

सेवा लतावत् फलशालिनी ते सेवा भवाभव्यमयी नयस्व ।
स्तृणाति ते ध्यानसरो विशालं पिपासिनां संसृतितापहारम् ॥१११॥

संसारकान्तारचिरप्रचारनिवारणे कारणमासनन्ति ।
त्वामेकमेवेति नमामि तेऽङ्घ्री भक्त्या तव भ्रान्तिहरावुदारौ ॥११२॥

श्रीवामेय ! गुणैरमेयमहिमा किं मादृशेनामुना
वाणीगोचरमत्र तत्रभवतः स्वा नीयते ते विभो ! ।
सर्वज्ञ ! स्मरणस्तवार्चननतिध्यानप्रभावोद्यते
मूको जल्पति संशृणोति बधिरः पङ्गुर्नरीनृत्यति ॥११३॥

वन्दे पार्श्वजिनं प्रभावसदनं विश्वत्रयीपावनं
श्रेयोवृक्षवनं नतामरजनं सम्फुल्लपद्मासनम् ।
सिद्धेः संवननं मदद्रुदहनं श्रद्धामयूरीघनं
विघ्नालीशमनं खवाजिदमनं संसारनिर्नाशनम् ॥११४॥

जम्बूद्वीपसरः सरोरुहसमुल्लासाय मानामर-
क्षोणीभृद्वरविष्ठरस्थिरतरं यत्तिष्ठते प्रष्टमम् (विष्टपम् ?) ।
यत्तत्रास्ति भुजङ्गपुङ्गवफणारत्नप्रभाभासुरः
श्रीमत्पार्श्वजिनेश्वरः स्वरसतस्तस्य स्तुतिः प्रस्तुता ॥११५॥

त्रिसन्ध्यं सन्धत्ते मनसि विशदां यः स्तुतिमिमा-
ममानध्यानश्रीप्रणयपरिणद्धप्रणतिभिः ।
श्रियो देवादीनामपि च स समासाद्य विभुतां
धुतान्तःकर्मौघः प्रणयति शिवश्रीप्रणयिताम् ॥११६॥

इति स्तवनम् ।

वज्रासनाद्यासनसंविधानैस्त्वगादिभिर्भेपजसञ्चयैर्वा ।
सीमन्तिनीदर्शनवर्जनाद् वा प्रणीतभोग्योज्झनतोऽपि यागी ॥११७॥

निद्राजयध्यानविधानतोऽपि ब्रह्मानघं ब्रह्मकृते विदध्यात् ।
समीहितार्थाः प्रभवन्ति यस्माद् द्रुमा इवाम्भोधरवारिपूरात् ॥११८॥

युग्मम् ।

किं चेष्टाभिरिहासनैः किमु तपोजापैस्तु किं सेवया
किं होमेन किमर्चनेण कुसुमैः किं किं सुभोगैरिति ।
एकं सुस्थिरमानसे तु विसतं ब्रह्मव्रतं कारणं
सिद्धीनामिह मन्त्रयन्त्रविषयो मोघा यदेकं विना ॥११९॥

सीमन्तो वनिताशिरःसु पदवी सीमन्तकस्य स्फुटं
वाला व्यालनिभा सुदुर्गतिपदानेतॄणि नेत्राण्यपि ।
यासां भ्रूरुरगीव कालकुटिला मोक्षाध्वसंरोधकृद्
यद्देहं मलगेहमेव मनसि ध्यात्वेति नारीं त्यज ॥१२०॥

इति ब्रह्मव्रतधारणम् ।

नो दाक्षिण्यवशान्न लोभवशतो नो वा भयात् स्नेहतो
नो कस्मायतिविस्मयार्थजनको मन्त्राधिराजः प्रभुः ।
देयः किन्तु परीक्ष्य मास........पट्कं सुचित्तं नले–
गाम्भीर्यं च कलादिकं च सुगुरुः शिष्याय यत्नादसौ ॥१२१॥

मन्त्राधिराजजिनभर्तुरमर्त्यमर्त्य–
नागेन्द्रचन्द्रकमठासुरसेवितस्य ।

प्रत्यङ्गिरादिनवकल्पसहोदरोऽयं
कल्पस्तु पञ्चपटलः सकलार्थदोऽस्तु ॥१२२॥

नेत्रानन्दकरस्तमस्ततिहरः सच्छ्लोकपद्माकर-
श्रेणीघस्रकरः सुरासुरनरप्रत्यूहभिद् विद्वरः ।
संसारच्छिदुरप्रतापनिकरः सर्वश्रियामाकरः
श्रीमद्भोगिवरश्रितो जिनवरः स स्यात् प्रसादे परः ॥१२३॥

शश्वत्श्रीप्रभ ! कर्मवृक्षपटलीनेमिप्रभ ! प्रोल्लस-
च्छान्तिश्रीललितप्रभामलविभाप्रोद्भाव ! देवैर्नत ! ।
श्रीसर्वज्ञ ! सुपुण्यसागरपरिस्फूर्जद्यशश्चन्द्रमः ।
सूरिप्रस्तुत ! सिद्धिवुद्धिसहित ! त्वं देहि मे मङ्गलम् ॥१२४॥

इति श्रीषट्कर्मद्रव्यसमु-
दयाष्टकर्ममन्त्रोद्धार-
नाम पञ्चमः
पटलः ॥ ५ ॥

---

सर्वसङ्ख्या ६२९

समाप्तोऽयं श्रीसागरचन्द्रसूरिविरचितो मन्त्राधिराजकल्पः ॥

---

# 'શ્રી નમિઊણ (ભયહર) સ્તોત્ર'ના યંત્રોની વિધિ.



**યંત્ર. ૧—**

કંકુ, ગોરૂચંદન વગેરે સુગંધી પદાર્થોથી આ યંત્રને ભોજપત્ર પર લખી, કુંવારી કન્યાએ કતિલા કાચા સુતરથી યંત્રને વીંટાળી ભુજાએ બાંધવાથી મહાભયોનું નિવારણ થાય છે. સાધન–મંત્રનો ૧૨૦૦૦ વાર જાપ કરવો. ત્રિકોણ કુંડમાં ૧૨૦૦૦ હોમ કરવો, અને મંત્ર જપવાના દિવસે ઉપવાસ કરવો, દાનદેવું તથા શ્રીપાર્શ્વનાથપ્રભુની (અષ્ટપ્રકારી) પૂજા કરવી. વિધિઃ–સોપારી ૨૧, રૂપૈયો ૧, ઓઢવાનું વસ્ત્ર તથા પુષ્પ વગેરે.

**યંત્ર. ૨—**

આ યંત્રને સુગંધી દ્રવ્યોથી લખી ઘરે પૂજા કરવાથી શાંતિને આપનારો થાય છે.

**યંત્ર. ૩—**

શુભદિવસે, શુભનક્ષત્રે સુગંધી દ્રવ્યથી લખી હરહંમેશ પૂજા કરવાથી સર્વકાર્યની સિદ્ધિ થાય છે.

**યંત્ર. ૪—**

આ યંત્રની વિધિ મૂળપ્રતોમાં નહિ મળી આવવાથી અત્રે આપી નથી, પરંતુ આ યંત્રની રચના ઉપરથી આ યંત્ર શાંતિદાયક હોય એમ લાગે છે.

—સારાભાઈ નવાબ.

**યંત્ર. ૫—**

આ યંત્રની પાના ૧૬ ઉપર ટીકામાં બતાવેલા अप्रतिचक्रे ! ० *મંત્રથી પૂજા કરીને પોતાની ભુજાએ ધારણ કરવાથી જ્વાલાગર્દભ (કોઇ રોગ વિશેષ) શીતળા, લૂક, ફોડા (વાના) અને દાંત તથા દાઢની પીડાનો નાશ થાય છે.

**યંત્ર. ૬ થી ૧૦ સુધી—**

આ પાંચે યંત્રો કંકુ, ગોરુચંદન વગેરે સુગંધી દ્રવ્યોથી ભોજ-પત્ર પર લખી, કુંવારી કન્યાએ કાંતેલા સુતરથી વીંટાળી ગળે અથવા ભુજાએ ધારણ કરવાથી અનુક્રમે—અપમૃત્યુ (અકાળે મરણ) ૬ યંત્ર, જ્વર (તાવ) ૭ યંત્ર, અપસ્માર (ગાંડપણ) ૮ યંત્ર, ભૂત, પ્રેત ૯ યંત્ર, તથા પિશાચ ૧૦ યંત્ર–ઉપરના ઉપદ્રવોથી બચાવ થાય છે.

**સાધન વિધિ:—**

સૌથી પહેલાં ॐ ह्रीँ श्रीँ भगवते पार्श्वनाथाय આ મંત્રનો જમણા હાથે ૧૦૦૦૦ દશહજાર જાપ કરવો, ત્યારપછી આ મંત્રે મંત્રી ૧૦૮ પુષ્પોથી યંત્રની પૂજા કરવી.

**યંત્ર. ૧૧—**

આ યંત્ર હરતાલ મિશ્રિત કંકુ વગેરે સુગંધી દ્રવ્યોથી લખી ૧૦૦૮ પુષ્પોથી પૂજી, નૈવેદ્ય મુકી પોતાની પાસે વહાણ, આગબોટ વગેરેમાં જલની મુસાફરી કરતી વખતે રાખવાથી જળનો ભય થાય નહિ. તે વાત નિઃસંદેહ સત્ય માનવી.

---

*જ્યાં મંત્રથી પૂજા કરવાની લખી હોય અને તેની સંખ્યા દર્શાવવામાં ન આવી હોય ત્યાં સામાન્યપણે ૧૦૮ની સંખ્યા જાણવી.

—સારાભાઈ નવાબ.

યંત્ર. ૧૨ તથા ૧૩—

આ બંને યંત્રો કંકુ વગેરે સુગંધી દ્રવ્યથી લખી ભુજાએ બાંધીયે તો લ્હાય, દાવાનલ વગેરે અગ્નિના ઉપદ્રવોથી રક્ષણ થાય.

સાધન વિધિઃ—

ॐ ह्रीं क्लीं ब्लूँ ठः ठः स्वाहा। આ મંત્રથી ૧૦૮ વાર પુષ્પથી યંત્રની પૂજા કરવી.

આજ યંત્રનો આકર્ષણ કાર્યમાં ઉપયોગ કરવો હોય ત્યારે આ યંત્રને આગ્નેયમંડલપૂર્વક (ત્રિકોણ) તાંબાના પતરાં ઉપર મનશીલથી લખીએ અને તે પતરાને અગ્નિથી તપાવીએ. આગ્નેય ધ્યાન ધરવાથી ૭ સાત રાત્રિમાં આકર્ષણ કરે.

આ યંત્ર હરતાલથી *ભોજપત્ર પર લખી ઘરમાં પેસવાના ઉંબરે દાટીયે તો શત્રુનાં કાર્ય સિદ્ધ થાય નહિ.

આજ યંત્ર કંકુ, ગોરૂચંદન તથા કનિષ્ઠિકા (સૌથી નાની) આંગળીના લોહીથી લખી પોતાની ભુજાએ ધારણ કરવાથી વિશેષે કરીને શત્રુની આશાઓ સિદ્ધ થાય નહિ, પરંતુ આ કાર્યમાં પાર્થિવ-મંડલથી ધ્યાન કરવું.

યંત્ર. ૧૪—

આ યંત્ર પાંદડા પર લખી સુગંધી દ્રવ્યથી પૂજન કરીને ડાબા હાથમાં રાખેલા જળથી છાંટીને પછી યંત્રને ભુજાએ બાંધવાથી દરેક પ્રકારના ઝેર દૂર થાય છે.

*જ્યાં જ્યાં ભોજપત્રપર યંત્ર લખવાનું વિધાન કર્યું હોય ત્યાં ત્યાં ભોજપત્રની જગ્યાએ કાસ્મીરી કાગળ અગર મજબુત અને પવિત્ર કાગળ લેવાથી કોઈ પણ જાતનો બાધ નથી આવતો એવું મારૂં માનવું છે.

—સારાભાઇ નવાબ.

**યંત્ર. ૧૫—**

આ યંત્રને કંકુ વગેરે સુગંધી દ્રવ્યથી [ભોજપત્ર પર] લખીએ [લખીને જમણી ભૂજાએ બાંધીએ] તો સંગ્રામમાં, રાજદરબારમાં અને માર્ગમાં સર્વપ્રકારના ભયથી રક્ષા કરે.

**સાધન વિધિઃ—**

સૌથી પહેલાં ॐ नमो ह्रौं ह्रूँ अरिहंताणं नमः । આ મંત્રનો જાપ ૧૨૦૦૦ વાર કરવો. સિદ્ધ થાય. સિદ્ધ થયા પછી આ મંત્રથી ૧૦૮ પુષ્પ મંત્રી યંત્રની પૂજા કરવી (પૂજા કરી યંત્ર પાસે રાખવાથી) સર્વ કાર્યમાં રક્ષા કરે.

**યંત્ર. ૧૬—**

કંકુ, ગોરોચંદન વગેરે સુગંધી દ્રવ્યોથી ભોજપત્ર પર લખી યંત્રને ભુજાએ ધારણ કરવાથી હાથીના ભયનો નાશ થાય.

**યંત્ર. ૧૭—**

આ યંત્ર સુગંધી દ્રવ્યથી લખીને ह्रौं ह्रूँ स्फ्रूँ ह्म्ल्व्र्यूँ क्म्ल्व्र्यूँ पार्श्वनाथाय स्वाहा । આ મંત્રથી મંત્રી ૩૦૦૮ ત્રણહજારને આઠ પુષ્પથી પૂજા કરીએ, પછી (પોતાની) ભુજાએ બાંધીએ તો શસ્ત્રભય થાય નહિ. તેમાં કોઈ જાતનો સંદેહ નથી.

અથવા પૂર્વોક્ત મંત્ર મંત્રીને પારો ચડાવેલી કોડીની ગોળી બનાવી ધારણ કરે તો યુદ્ધમાં શસ્ત્રના ભયથી મુક્ત રહે.

અથવા કડવી તુંબડીનું મૂળ દીવાળીની સાંજે નગ્ન થઇ ગ્રહણ કરે પછી લોહ વેષ્ટિત કરી મુખે રાખે તો યુદ્ધમાં શસ્ત્ર ભય હરે.

**યંત્ર. ૧૮—**

આ યંત્ર સુગંધી દ્રવ્યથી લખી ॐ ह्रीं श्रीं अर्हं नमिऊण पास विसहर वसह जिण फुलिंग ह्रीं श्रीं नमः स्वाहा । આ મૂળ મંત્રથી પૂજિએ તો સર્વભયથી રક્ષા થાય.

યંત્ર. ૧૯—

આ યંત્ર કેસર વગેરે સુગંધી દ્રવ્યોથી લખી ॐ पार्श्वजिनेन्द्राय ह्रीं ह्वीं हंसः हर हर स्वाहा। આ મંત્રથી ૧૦૮ વાર મંત્રેલા સુગંધીદાર શ્વેત ૧૦૮ પુષ્પથી પૂજન કરી જમણી ભુજાએ ધારણ કરવાથી શાંતિદાયક, પુષ્ટિદાયક થાય અને સર્વભયનું નિવારણ કરે.

યંત્ર. ૨૦—

કંકુ વગેરે સુગંધી દ્રવ્યથી લખી આ યંત્રનું ૧૦૮ ઉત્તમ:પુષ્પો વડે પૂજન કરવાથી સર્વત્ર જય આપનાર થાય. દરેકે દરેક પુષ્પને મૂળમંત્રથી મંત્રીને પૂજન કરવું જોઇએ.

યંત્ર. ૨૧—

આ યંત્રની વિધિ ટીકામાં નથી, પરંતુ અમદાવાદના ડહેલાના ઉપાશ્રયના ભંડારની પ્રતના અંતભાગમાં આ યંત્રની આકૃતિ ચીતરેલી હોવાથી ઉપયોગી ધારીને અત્રે છપાવવો ઉચિત ધાર્યો છે; પરંતુ યંત્રમાં ઉપયોગમાં લેવામાં આવેલ શ્રીં શબ્દ, લક્ષ્મી બીજ હોવાથી આ યંત્ર લક્ષ્મી પ્રાપ્તિ માટે હશે એમ મારૂં માનવું છે.

—સારાભાઇ નવાબ.

---

# 'શ્રી ધરણોરગેન્દ્ર (પાર્શ્વનાથ) સ્તોત્ર'ના યંત્રોની વિધિ.



યંત્ર. ૨૨—

આ યંત્ર કંકુ, ગોરોચન વગેરે સુગંધી દ્રવ્યથી લખી જે પુરૂષ પોતાની વામભુજાએ ધારણ કરે તે લોકોને વલ્લભ અને લક્ષ્મી સંપન્ન થાય.

આ યંત્રને ધારણ કરવાથી પુત્રહીન પુત્ર પામે, પુત્ર થઈને જીવતા ન હોય તેની સંતતિ દીર્ઘાયુષ્ય પ્રાપ્ત કરે, અને દુર્ભગ હોય તે સુભગ બને.

આ યંત્રને ધારણ કરનારને ખાધેલું વિષ પરાભવ ન કરે, લૂતા (એક જાતનો રોગ), ફોડા તથા ભૂત વગેરે પાસે પણ ન આવે અને આ યંત્રના સ્મરણ માત્રથી સજ્જન પુરુષોનું પાપ પણ નાશ પામે.

આ યંત્રને બંને હાથમાં સ્થાપીને ડાબો હાથ પછાડીને હ્રીં હર હું હઃ ઉચ્ચાર કરવાથી જરાવારમાં વિષનો નાશ થાય.

વિશેષ નોંધઃ—બે પડવાળા ભોજપત્ર પર આ વિદ્યા લખવી.

યંત્ર. ૨૩—

આ યંત્રને જુદીજુદી રીતે ઉપયોગમાં લેવાથી શત્રુનું મારણ, સ્તંભન, ઉચ્ચાટન, મોહન તેમજ વિદ્વેષણ પણ થાય છે.

યંત્ર. ૨૪—

ઉત્તમ દિવસે, ઉત્તમ નક્ષત્રે અને ઉત્તમ ચોઘડીએ શ્રી પાર્શ્વ-પ્રભુની પ્રતિમા આગળ શ્વેતવસ્ત્ર પહેરી, શ્વેતપુષ્પ, સ્નાન વિલેપનાદિ

કરી, પવિત્ર થઈ, શ્રી પાર્શ્વપ્રભુની પૂજા કરી, પોતાની શક્તિ અનુસાર બલિ વગેરે મૂકીને પરમેષ્ઠિસ્તવના અક્ષરોથી આત્મરક્ષા કરીએ. ૧ નાભિ, ૨ મુખ, ૩ નેત્ર, ૪ મસ્તક અને ૫ દિશાઓમાં ૐકાર યુક્ત શ્રીપાર્શ્વનાથનો ન્યાસ કરવો. પછી ૨૮ અંશથી માતંગિની વિદ્યા લખીએ. તેને ૧૦૦૮ જાઇના ફૂલથી જપિએ, પછી પાર્શ્વપ્રભુને તથા સાધુઓને ભક્તિભાવથી પૂજિ વંદન નમસ્કાર કરી યંત્રને ભુજાએ ધારણ કરવાથી સિદ્ધ થાય. આ યંત્ર સિદ્ધ થયો થકો શાંતિના અભિલાષિઓને શાંતિ આપનાર, પુષ્ટિના અભિલાષિઓને પુષ્ટિનો દેનાર, ધનની આકાંક્ષાવાળાઓને ધન આપનાર, પુત્રની પ્રાપ્તિ માટે ઝંખનારાઓને પુત્ર આપનાર છે. શ્રી જિનેશ્વરદેવની ભક્તિ કરવાથી આ યંત્ર સર્વ સૌભાગ્યનો દેનાર, દરેક ઉપદ્રવોનો નાશ કરનાર અને સર્વ પાપનો નાશ કરનાર થાય છે.

યંત્ર. ૨૫—પ્રતમાં વિધિ નથી.

યંત્ર. ૨૬—

નાગોના હૃદય સમાન શ્રીપાર્શ્વનાથપ્રભુને કાળાદિ ભેદાનુસાર પુષ્પ, દીપ, વિલેપનાદિથી પૂજન કરીને વિચિત્ર પ્રકારના ૧૦૮ પુષ્પોથી જાપ કરીયે, સિદ્ધ થએલો મંત્ર ગરૂડની પેઠે વિષનો નાશ કરે છે. [ તે પુરુષ ] દરેક નાગ જાતિ સાથે ક્રીડા કરી શકે છે સર્વ પ્રાણીઓના ભયને દૂર કરે છે.

જે માણસ કમળપત્ર પર રહેલા નાગોને ધારણ કરે છે, તને શાકિનીનો ભય થાય નહિ અને દાહજ્વર વગેરેની શાન્તિ થાય.

યંત્ર. ૨૭—

ॐ पार्श्वनाथ हुं स्वाहा । આ મંત્રના હુંકારનો નાગાત્મક જલ વડે હાથ ઉપર વિન્યાસ કરવાથી વિષનો નાશ કરે.

(સ્નાન કરી) પવિત્ર થઇ, પુષ્પ, ધૂપ, વિલેપનાદિવડે શ્રીપાર્શ્વનાથની પૂજા કરી તેમના સન્મખ ॐ ह्रीं. लाह्मपलक्ष्मी घुरु घुरु ॐ

સ્વાહા । આ પૂજા મંત્રનો ૧૦૦૦૦ દસ હજાર જાપ કરવો, પછી શાક, પિન્યાક, કંદાદિ, સર્વધાન્ય, શુભફળ, દહિં અને પકવાન્ન વગેરેના નૈવેદ્યથી તથા બલિ અને દીપ દાન કરવાથી વિદ્યા સિદ્ધ થાય. શરીરમાં સ્પંદન થાય અને નાડીઓના હલન ચલનથી બોધ થાય. ઈડા, પિંગલા અને સુષુમ્ણા એમ ત્રણ નાડી છે. આ ત્રણે અનુક્રમે સ્ત્રી, પુરુષ અને નપુંસક સંજ્ઞાવાળી છે. એમના પ્રવાહથી સાધ્ય તથા અસાધ્યનું જ્ઞાન થાય, આ નાડીઓની ૨૧ વર્તના છે.

**યંત્ર. ૨૮—**

૧૬ પાંખડીયા કમળાકૃતિવાળું ચિત્રકાવ્ય છે.

**યંત્ર. ૨૯—**પ્રતમાં વિધિ નથી.

**યંત્ર. ૩૦—**

આ યંત્ર પ્રભુ પાર્શ્વનાથના પૂજાવિધાનથી સર્વકલ્યાણકારક થાય છે અને જિનેશ્વરના ચરણારવિંદની માફક ભક્તિ વગરના જીવોને નિષ્ફળ નીવડે છે.

આ યંત્ર કંકુ, ગોરોચન વડે સોનાની લેખિનીથી ભોજપત્ર પર લખી ઘી અને મધમાં સ્થાપન કરે તો શત્રુવર્ગનો નાશ કરે.

આ યંત્ર હું અને ફટ્ શબ્દથી રહિત અમાવસ્યા અથવા મંગળવારના દિવસે સ્મશાનના વસ્ત્રઉપર વિષ, રૂધિર અને (સ્મશાનના) અંગારાથી લખી અગ્નિએ તપાવે અગર શત્રુના ઘરે નાંખે તો તે શત્રુના કુલનો નાશ કરે.

આ યંત્ર રાજ, અગ્નિ, પિશાચ, સિંહ, ચોર, હાથી, દુષ્ટ વિષ, શાકિની અને શત્રુ વર્ગનો નાશ કરનાર છે.

**યંત્ર. ૩૧—**

આ યંત્ર કળશ ઉપર, હાથે અથવા દંડ ઉપર સ્થાપન કરવાથી સર્વ પ્રકારના વિષને દૂર કરે છે.

આ યંત્ર કંકુ, ગોરોચનથી લખીને આપવાથી મેરી ફોડા, લૂક જ્વાલાગર્દભ, શાકિની અને વિસ્ફોટક વગેરેનો નાશ કરે છે.

યંત્ર. ૩૨—

આ યંત્રનું પાણી છાંટવાથી અથવા વિષથી બાધિત થએલાના હૃદયે આ યંત્રનો વિન્યાસ કરવાથી નાગ, વૃશ્ચિક, ઊંટ, ઉંદર, અગ્નિ, વાનર વગેરેના ઝેર આદિની ઉપશાંતિ થાય છે અર્થાત નિર્વિષ કરે અને લોકોને વિસ્મય પમાડે.

યંત્ર. ૩૩—

આ યંત્ર કંકુ, ગોરોચન વગેરે સુગંધી દ્રવ્યથી પાટીયા ઉપર લખવાથી સર્વ પ્રકારની ઇતિ, વર્ષાદની ખેંચ ( અનાવૃષ્ટિ ) અથવા અતિવૃષ્ટિ, ટાઢ અને અગ્નિદાહ વગેરેના ઉપદ્રવનો નાશ કરે છે.

યંત્ર. ૩૪—

જિનેશ્વરની પૂજા કરી, તેમના સન્મુખ દધિ, ફળ, ધાન્ય, પકવાન વગેરે નૈવેદ્ય મુકી, શુદ્ધ વસ્ત્ર પહેરી શ્રેષ્ઠ પુષ્પ અને ચંદનાદિથી પૂજન કરી પાંચ રંગના થાપા ( હાથના) દઇ એટ ૧૦૮ પુષ્પોવડે જાપ કરવાથી સિદ્ધ થાય અને તેથી મનુષ્ય ગરૂડની માફક નાગોની સાથે ક્રીડા કરે.

આ યંત્ર વંધ્યાને પુત્ર, મૃતવત્સાને જીવિત પુત્ર ( આપનાર), રોગિઓના રોગ અને શાકિની, ભૂત વગેરેના ઉપદ્રવોને મટાડનાર છે.

યંત્ર ૩૫—

કંકુ, ગોરચંદનાદિ સુગંધી દ્રવ્યથી ભોજપત્ર ઉપર જાઈની કલમ વડે આ યંત્ર લખી ભુજાએ ધારણ કરવાથી મનુષ્ય કોઈ પણ સ્થળે પરાજય પામે નહિ.

દરેક પ્રકારના વિઘ્નનો નાશ કરે, યશ, લક્ષ્મી અને સૌખ્ય આપે. ધર્મ, અર્થ, કામ અને મોક્ષ આ ચારે પુરૂષાર્થ સાધવા માટે આ યંત્ર ઉપયોગી છે.

આ પરમ સદ્ભાવ છે, મનોહર તત્ત્વ છે અને સર્વ શાસ્ત્રોનો સાર છે, માટે દરેક કાર્યમાં યોજી શકાય છે.

યંત્ર ૩૬—પ્રતમાં વિધિ નથી.

યંત્ર ૩૭—

અરણુના પત્ર ઉપર કાગ પીંછાની લેખિનીથી પોતાના રક્ત વડે લખી આ યંત્રઅગ્નિ ઉપર તપાવવાથી શત્રુઓનો નાશ કરે છે.

યંત્ર ૩૮—

શરાવ સંપુટમાં (બે કોડીઆ ઉપરાઉપરી મૂકી) અગર પાટીઆ ઉપર પીતવર્ણું હરતાલ અથવા હલદરથી આ યંત્ર લખવાથી વિષનો નાશ કરે.

યંત્ર ૩૯—

આ યંત્ર શુભ દ્રવ્યથી લખી ઘરે સ્થાપન કરવાથી સર્વ પ્રકારે શાંતિને આપનાર છે.

યંત્ર ૪૦—

આ યંત્ર કંકુ, ગોરૂચંદન અને ચંદન આદિ સુગંધી દ્રવ્યોથી લખી ભુજાદિ સ્થળે બાંધવાથી ગ્રહશાંતિ કરે, આ યંત્રમાં જણાવેલા પાંચે વર્ણ ભિન્ન ભિન્ન રચનાના પ્રકારથી સર્વ કાર્ય કરનાર છે. તે આ પ્રમાણેઃ—દરેક શુભકાર્યમાં માહેંદ્રમંડળ યોજવું અને દુષ્ટકાર્યમાં આગ્નેય તેમજ વાયવ્યમંડળનો ઉપયોગ કરવો.

—o—

## 'અટ્ટે મટ્ટે' યંત્રની વિધિ.

યંત્ર ૪૧ ની વિધિ:—

મંત્ર:—ॐ नमो भगवते श्रीपार्श्वनाथाय ह्रीँ धरणेन्द्रपद्मावतीसहिताय अट्टे मट्टे क्षुद्रविघट्टे क्षुद्रान् दुष्टान् स्तम्भय स्तम्भय स्वाहा।

વિધિ:—

कुङ्कुमगोरोचनादि सुरभिद्रव्यैर्भूर्यपत्रोपरि पूर्वलिखितमन्त्रेणाभिमन्त्र्य १०८ जाति लेखिन्या लिखित्वा तदनन्तरं मन्त्रेणानेन यन्त्रं जपित्वा कण्ठे शीर्षे बाहौ हस्ते वा बध्नीयात्। ततोऽरण्ये दुष्टश्वापदादि भयेऽपराजितो, राजकुले चापराजितो भवति। शाकिनी–भूत–पिशाच–राजकुलानां मुखबन्धो भवति। सर्वकर्मकरी रक्षा निश्चयेन सिद्धिः॥

ભાવાર્થ:—

કંકુ, ગોરચંદનાદિ સુગંધી દ્રવ્યથી ભોજપત્ર ઉપર જણાવેલ મંત્રથી ૧૦૮ વાર મંત્રી, જાઈની કલમથી યંત્ર લખી પછી એજ મંત્રથી યંત્રને મંત્રી, ગળે, મસ્તકે, ભુજાએ અથવા હાથે બાંધીએ તો અરણ્યમાં દુષ્ટ હિંસક જાનવરથી પરાભવ ન પામે, રાજદરબારમાં જય મેળવે, શાકિની, ભૂત, પિશાચ, રાજકુલનો મુખબંધ થાય; આ વિદ્યા સિદ્ધ્યએલી હોય તો સર્વ કાર્યમાં રક્ષા કરવા વાળી નિશ્ચયે કરીને છે.

યંત્ર ૪૨ ની વિધિ:—

મંત્ર:—

ॐ नमो भगवते श्रीपार्श्वनाथाय ह्रीँ धरणेन्द्रपद्मावतीसहिताय अट्टे मट्टे क्षुद्रविघट्टे क्षुद्रान् दुष्टान् स्तम्भय स्तम्भय स्वाहा।

વિધિ:—

मन्त्रेणानेन वार १०८ पुष्पमाला जपित्वा पात्रस्य कण्ठे प्रक्षेप्या भूत-प्रेत-पिशाच-शाकिनी-डाकिन्यादीनां सर्वरोगादीनां च स्तम्भनं भवति

निश्चयेन । महाप्रतापकृदिदं यन्त्रम् । चिन्तामणिसमानम् गुरोः प्रसादात् सिद्धिर्भवति । श्रीपार्श्वनाथस्य चरणकमलप्रभावात् निर्विघ्नं सिद्धिरस्ति ॥

**ભાવાર્થ:—**

ઉપરોક્ત મંત્રથી ૧૦૮ વાર પુષ્પમાળા મંત્રી પાત્ર (ગ્રસ્ત અથવા રોગી) ને ગળે નાંખીયે તો ભૂત, પ્રેત, પિશાચ, શાકિની, ડાકિની વગેરેનું તેમજ સર્વરોગોનું સ્તંભન કરે. આ યંત્ર મહા પ્રતાપ વાળો છે. ચિંતામણિ રત્ન સમાન છે. ગુરૂ કૃપાએ સિદ્ધ થાય [અથવા] શ્રીપાર્શ્વનાથભગવંતના ચરણકમલના પ્રભાવથી નિર્વિઘ્ન પણે સિદ્ધ થાય.

**યંત્ર ૪૩ ની વિધિ:—**

इदमपि यन्त्रं पूर्वविधिना पट्टे विलिख्य, पात्रं निवेश्य, गुग्गुलगुटिकां १०८ जुहुयात् ततो भूतोच्चाटनं भवति ।

एकान्तर–वेलाज्वर–तृतीयज्वरादिषु अभिमन्त्रितरक्षया कुण्डकत्रयं कृत्वा इदं यन्त्रं भूर्ये लिखित्वा कुङ्कुमादिना पुनर्यन्त्रस्य पूजां कृत्वा एतन्मध्यवर्तिना क्षुद्रविघट्टे इत्यत्र पुरुषरोगनामोच्चारणपूर्वकं मन्त्रेणानेन जापं विधाय कुमारीसूत्रेणात्मप्रमाणेन दवरकं कुर्यात् तत् तस्य हस्तादौ बध्यते क्षुद्रोपद्रवं दूरं स्यात् ।

पुनरिदमेव यन्त्रं चन्दनादिना पूज्यते पवित्रस्थाने रक्षा अभिमन्त्र्य प्राकाराकारेण क्रियते दूरस्थो रोगिणः श्रीखण्डेन खटिकया लिखित्वा पूज्यते भव्यो भवति ।

पट्टे लिखित्वा सहस्र १२००० जापो जातिपुष्पैर्दशांशेन होमः ततो मन्त्रः सिद्धयति ।

ઉપરોક્ત વિધિ પ્રમાણે આ યંત્ર પાટલા ઉપર લખી તે ઉપર પાત્રને બેસાડી ગુગ્ગલ ગોળી ૧૦૮ હોમીએ તો ભૂતોચ્ચાટન થાય.

એકાંતર (એકાંતરીયો) વેલાજ્વર (ટાઇમે ટાઇમે આવનાર) અને તૃતીયજ્વર (ચોથીયો) વગેરે તાવમાં ઉક્ત મંત્રથી મંત્રેલી

રક્ષા વડે. ૩ ત્રણ કુંડાળા કરી આ મંત્ર કંકુ વગેરેથી ભોજપત્ર પર લખી ફરી મંત્રની પૂજા કરી, મંત્રની મધ્યે આવેલા ક્ષુદ્રવિઘટ્ટે શબ્દને બદલે-ઠેકાણે પુરુષના રોગનું નામ બોલીને આ મંત્રથી જાપ કરી કુંવારી છોકરીએ કંતેલા સુતરનો શરીર પ્રમાણ દોરો રોગીના હાથ વગેરે સ્થાને બાંધવાથી ક્ષુદ્રોપદ્રવ દૂર થાય.

આજ મંત્ર ચંદન વગેરેથી લખી પૂજી પવિત્ર સ્થાને રક્ષા મંત્રી કુંડાળા ૩ ત્રણ કરી, રોગીને દૂર બેસાડી શ્રીખંડ તથા ખડીથી લખી પૂજીએ તો ( રોગી ) નિરોગી થાય.

આ મંત્ર પાટલા ઉપર લખી ૧૨૦૦૦ બારહજાર જાઈના ફૂલથી જપી, દશાંશ ( બારસો ) હોમ કરવાથી મંત્ર સિદ્ધ થાય છે.



# 'તિજયપહુત્ત (સત્તરિસય) સ્તોત્ર' ના યંત્રોની વિધિ.

યંત્ર. ૪૪---

विजयपहुत्तप्रथमयंत्रविधिः--

पणमिय सिरिसंतिजिणं थुणामि एकेहिं अरिहसत्तरिसयं।
परमिट्ठिकुट्ठेसुं आगमविहि सव्वओभद्दं ॥१॥

तेयाला चउवीसा तीसा छत्तीस सत्ततीसा य।
कम्मवणदहणनिउणा जिणवसहा दिंतु मम सिद्धिं ॥२॥

पणतीसा इगताला बायाला तिविस ईगुणतीसा य।
कल्लाणपंचकलिया संघस्स कुणंतु कल्लाणं ॥३॥

बावीसा अट्ठवीसा चउतीसा दुगुणवीस छायाला।
सिहि अहियाहि अहि अहिय दुट्ठट्ठिय मोहजोहहरा ॥४॥

गुणयाला पणयाला छव्वीसा सत्तवोस तित्तीसा।
जरमरणरोगरहिया मंगलं दिंतु मे (मम सिद्धिं) ॥५॥
इगतीसा बत्तीसा ठतीस चउचत्त पणवीसा।
वंतरभूयपिसाया रक्खस मुहरक्खगा हुंतु ॥६॥
इय विहिणा सत्तरिसयं पडिलेहिअ जो थुणेइ।
अच्चेई तस्स नय हवइ विग्घं सिग्घं सिद्धिं समेइ य ॥७॥
सिरि नण्णसूरि पणयं सत्तरीसय जिणवराणं भत्तीइ।
भवियाण कुणउ संतिं रिद्धिवुद्धिं धिइकित्ति ॥८॥

-इति सत्तरिसयं यन्त्रस्तवं-इति प्रथम यन्त्रविधिः ॥१॥

